अधिकरणाच्च ( वार्तिक )—काच् in the above sense is attached ( optionally ) to a locative also. Thus प्रासादीयति—The mendicant in his hut behaves like one living in a palace. कुटीयति—( the king in the palace behaves like one in a hut.) The former indicates cheerfulness while the latter morbidity.

मित—। उपमानादिति। 'धातोः कर्म्मणः—' ( ३।१।७ ) इत्यतः कर्मण इत्यनुवर्त्तते। 'सुप आत्मनः क्यच्' (३।१।८) इत्यतस्तु सर्वमपि। तदाह—उपमानात् कर्मण इति। विष्णूयतीति। 'अकृत्सार्व—' ( २२९८ ) इति दीर्घः। अधिकरणाच्चेति—वार्त्तिकम्। 'उपमानाभावेऽधिकरणाच्चे'तीत्येव सूचितव्यमित्यर्थः। प्रासादीयति इत्यादि। 'क्यचिचे'ति ( २५६८ ) इतीत्त्वम्। प्रासादे इव कुट्यां सुखं वर्त्तते इति। कुट्यामिव प्रासादे दुःखं वर्त्तते इति चार्थः। वेत्यनुवर्त्तनात् पूर्ववद्वाक्यमपि।

२६६५। कर्त्तुः क्यङ् सलोपश्च ॥३।१।११॥

दी—। उपमानात् कर्त्तुः सुबन्तादाचारे क्यङ् वा स्यात्, सान्तस्य तु कर्त्तृवाचकस्य लोपो वा स्यात्। क्यङ् वेत्युक्तेः पक्षे वाक्यम्। सान्तस्य लोपस्तु क्यङ्सन्नियोगशिष्टः। स च व्यवस्थितः। 'ओजसोऽप्सरसो नित्यमितरेषां विभाषया' (वार्तिक)। कृष्ण इवाचरति कृष्णायते। ओजःशब्दो वृत्तिविषये तद्वति। ओजायते। अप्सरायते। यशायते-यशस्यते। विद्वायते—विद्वस्यते। त्वद्यते। मद्यते। अनेकार्थत्वे तु युष्मद्यते। 'क्यङ्मानिनोश्च' (८३७)। कुमारीवाचरति कुमारायते। हरिणीवाचरति। हरितायते। गुर्वीव गुरूयते। सपत्नीव = सपत्नायते—सपत्नीयते—सपत्नीयते। युवतिरिव

युवायते। पट्वीमृद्व्याविव पट्वीमृदूयते। 'न कोपधायाः' (८३९)। पाचिकायते। 'आचारेऽवगल्भक्लीबहोडेभ्यः क्विब् वा' (वार्तिक)। वा—ग्रहणात् क्यङपि। अवगल्भादयः पचाद्यजन्ताः। क्विप् सन्नियोगेनानुदात्तमनुनासिकत्वं चाच्-प्रत्ययस्य प्रतिज्ञायते। तेन तङ्। अवगल्भते। क्लीबते। होडते। भूतपूर्वादप्यनेकाच आम्। एतद्वार्तिकारम्भसामर्थ्यात् न च अवगल्भते इत्यादिसिद्धिस्तत्फलम्। केवलानामाचारेऽपि वृत्तिसम्भवात्। धातूनामनेकार्थत्वात्। अवगल्भाञ्चक्रे। क्लीबाञ्चक्रे। होडाञ्चक्रे। वार्तिकेऽवेतुपसर्गविशिष्टपाठात् केवलादुपसर्गान्तरविशिष्टाच्च क्यङेवेति माधवादयः। तङ् नेति सूचितम्। 'सर्वप्रातिपदिकेभ्यः क्विब् वा वक्तव्यः' (वार्तिक)। पूर्ववार्तिकं तु अनुबन्धासङ्गार्थं, तत्र क्विबनूद्यते। प्रातिपदिकग्रहणादिह सुप इति न सम्बद्ध्यते। तेन पदकार्य्यं न—कृष्ण इवाचरति कृष्णति। 'अतो गुणे' (१९१) इति शपा सह पररूपम्। अ इवाचरति अति। अतः। अन्ति। प्रत्ययग्रहणमपनीय अनेकाच इत्युक्ते र्नाम् औ। अतुः। उः। द्वित्वम्। 'अतो गुणे' (१९१)। 'अत आदेः' (२२४८) इति दीर्घः। णल् औ। वृद्धिः। अतुसादिषु तु 'आतो लोप इटि च' (२३७२) इत्याल्लोपः। मालेवाचरति मालाति। लिङ्गविशिष्टपरिभाषया (-षायाः?) एकादेशस्य पूर्वान्तत्वाद्वा क्विप्। मालाञ्चकार। लङि। आमालात्। अत्र हल्ङ्यादिलोपो न। ङीपूसाहचर्यदापोऽपि सोरेव लोपविधानात्

नात्। इट्सकौ। अमालासीत्। कविरिव कवयति। आशीर्लिङि कवीयात्। 'सिचि वृद्धिः—' (२२९७) इत्यत्र 'धातो'रित्यनुवर्त्य धातुरेव यो धातुरिति व्याख्यानान्नामधातोर्न वृद्धिरिति कैयटादयः। अकवयीत्। माधवस्तु नामधातोरपि वृद्धिमिच्छति। अकवायीत्। विरिव—वयति। विवाय। विव्यतुः। अवयीत्—अवायति। श्रीरिव—श्रयति। शिश्राय। शिश्रियतुः। पितेव पितरति। आशिषि रिङ्। पित्रियात्। भूरिव भवति। अत्र 'गातिस्था—' (२२२३) इति, 'भुवो वुक्—' (२१७४) इति, 'भवतेः—' (२१८१) इति च न भवति। अभिव्यक्तत्वेन धातुपाठस्थस्यैव तत्र ग्रहणात्। अभावीत्। बुभाव। द्रुरिव—द्रवति। 'णिश्रि—' (२३१२) इति चङ् न। अद्रावीत्।

The affix क्यङ् in the sense of आचार or treatment, is attached optionally to a सुबन्त base which is the subject (of the sentence) and at the same time is the standard of comparison (उपमान)—but (the सकार of) a base which is स-ending and expresses the sense of a subject elides optionally (in connection with the क्यङ्). From the fact of 'क्यङ् वा', the very sentence will serve as an alternative. The elision (of the स) of the सान्त, however, is taught to take effect only when क्यङ् is made use of. And this elision again, has been thus handled under the varttika—'ओजसोऽप्सरसः—' which means—'(the स) of ओजस् and अप्सरस् is dropped unalterably (नित्य) whereas that of other (सान्त

bases ) alternatively ( विभाषा )'. Thus कर्त्तुः काङ्—लोपश्च by 'अकृत्सार्व—' ( 2298 ) and आत्मनेपद by 'अनुदात्तङितः—' सलोपः—ओजायते etc where the term ओजस् signifies the of one possessed of ओजस् or force hence ओजस्वी or ble—strong ( 'ओजायते' is here a वृत्ति for which see शेषप्रकरणम् )। Similarly यशस् in यशायते—यशस्यते implies famous. त्वद्यति etc—the sense is त्वमिवाचरति etc—see ante, '— ' ( 1373 ) under 'नः क्ये'—2659. By 'क्यङ्मानिनोश्च' (837) teaches पुंवद्भाव of feminine bases in क्यङ् we have इव-चरति—कुमारायते with लोप of ङीप्। Similarly हरितायते— like one of yellow colour, cp. 'वर्णादनुदात्तात्तोपधात्तो नः' ( दीर्घ everywhere by 'अकृत्सार्व ( 2298 ). The base ambignous ; thus—(1) सपत्न ( a foe ) and ङीन् by शाङ्ग ङीङीन् ( 527)—? which by पुंवद्भाव and 'अकृत्—'in काङ् सपत्नायते । ( 2) समानः पतिर्यस्या इति सपत्नी by 'नित्यं सपत्न्यादिषु' ( 49 and न by 'पत्युर्नो—' ( 490 ) whence by पुंवद्भाव etc we —सपतीयते। ( 3 ) The word सपत्नी expressing conjugal nection is always feminine. Thus it has not the corresponding पुंवद्भाव and we therefore get सपत्नीयते। पट्वीमृद्व्यते— has no पुंवद्भाव as it is intervened by मृद्वी and मृद्वी gets it ( because it ( मृद्वी ) is invariably followed by क्यङ्। 'न कोप—' forbids पुंवत्त्व। 'आचारे—' ( वार्त्तिक)—क्विप् in the sense of is optional after अवगल्भ ( daring ) etc. From the accepta of वा in the वार्त्तिक we have काङ् also after them. etc are derived with क्यच् directed by 'नन्दिग्रहिपचादिभ्यो

[अ]तः' ( 2896 ). अनुदात्तत्व and अनुनासिकत्व ( of the अ ) of [t]he अच् are promised i.e. admitted in connection with the [a]pplication of क्विप्. Hence we have तङ् or आत्मनेपद here [d]ue to the elision of अ which is अनुदात्त and thus the [ca]se falling under 'अनुदात्तङित:—' ). Thus अवगल्भते, क्लीवते [ac]ts like an eunuch etc. The Varttika 'कास्यनेकाज्ग्रहणं कर्त्तव्यम्' [u]nder 'कास्प्रत्ययादाम्—' ( 2306 ) enjoins आम् after what is [अने]काच् at that very moment. But here from the fact of the [co]mmencement or existence of this Varttika 'आचारेऽवगल्भ—' [w]e have आम् after अवगल्भ etc. even though they were अनेकाच् [pr]eviously i. e. before the elision of अ. ( It is important here [to] note that the root is separated from the उपसर्गs, if any, [w]hen an affix, which causes the धातुसंज्ञा of the same ( as [सन्], क्यङ्, क्विप् etc ), follows. Thus अवगल्भ also like क्लीव etc. [एक]ाच् in reality ). Nor can it be argued that the above [V]arttika is only to achieve अवगल्भते etc. i.e to enjoin आत्मनेपदित्व [of] अवगल्भ etc. Because the bases stripped of the उपसर्गs [or] such other पूर्वपदs too, may bring out the sense of अचार [als]o due to the dictum that roots are of multifarious meanings. [Th]us अवगल्भाचक्रे etc. Madhava and others hold that on the [sco]re of the reading of अव in the above Varttika, the base [गल्भ] will take क्यङ् only ( and no other affix ) even when it [sta]nds by itself or is preceded by any other उपसर्ग. It is, how— [ev]er, proper to state that it will not take तङ् or आत्मने. termi- [nat]ions ( in as much as it ( अवगल्भ ) may be followed by

क्विप् also by another varttika 'सर्वप्रातिपदिकेभ्यः—'। Thus it is ... that गल्भ without उपसर्गs or with उपसर्गs excepting ... परस्मै. when क्विप् follows—गल्भति प्रगल्भति)। 'सर्व—' varttika— The former varttika is for the sake of attaching अनुबन्ध (... in con. with क्विप् which is affixed after अच्. From the ... प्रातिपदिकग्रहण in this varttika, सुप् ( from 'सुप आत्मनः—') is drawn into here. Thus here ( in con. with क्विप् ) there ... be no operation due in a पद ( e g. राजानति (.राजा ... राजन् + क्विप्—without नलोप ). इतुरुक्तेः—i.e in 'कासूप्रत्यय... ( 2306 ). Therefore णल् etc, come in अ + णल् = अ ... अ णल् (अतो गुणे) = आ णल् (अत आदेः) = आ औ ( 'आत औ—' 2371) = ( 'वृद्धिरेचि'—72 ). अतुसादिषु तु etc easy. Though by 'अर्थवद... प्रत्ययः प्रातिपदिकम्' ( 178 ) माला is not a प्रातिपदिक due to its ... with टाप्, yet क्विप् by the वार्त्तिक 'सर्वप्राति—' takes effect ... परि—'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्'—anything taught ... pronouncing प्रातिपदिक is to be understood to be taken in ... its genders or—because the single substitute is ( natural ... यूवान्त or what it was primarily—माल (the प्रातिपदिक). In ... there is no chance of the elision of ति by 'हल्ङ्याब्भ्यः—'( 254 ) ... it has been settled that सु only ( of सुबन्त affixes ) disappears ... coming after आप् or आबन्त bases also as it ( सु ) does after ... or ङीबन्त bases due to its ( of आप् ) contact with ङीप् ( in ... ङ्याब्भ्यः— ). The idea is—तिप् and सिप् do not * invariably ...

* Thus गौरी + क्विप् = whence in लुङ् we have ... without लोप of ति as it does not invariably follow upon ङी।

follow upon an ङीबन्त base as सु does. Thus the elision of सु only is effected by 'हल्ङ्याब्भ्यः—' and thence it is inferred or rather concluded that सु only and not तिप् and सिप् also will elide when coming after an आबन्त base, इट्सकौ—by 'यमरमनमातां सक् च' (2377). कवीयात्—by 'अकृत्—' (2298). धातुरिव धातुः i. e a primary root and not a secondary one as नामधातु etc. माधवस्तु—because he does not draw the term 'धातोः' from 'ऋत इद्धातोः' (2390—7. 1. 100) to 'सिचि वृद्धिः—' (2297—7.2.1). वीयते i.e acts like a वि or bird. अभिव्यक्तत्वेन—i. e due to its being expressly mentioned.

मित—। कर्त्तुरिति। वाक्यद्वयविशिष्टं सूत्रम्। कर्त्तुः क्यङ् इत्येकं सलोपश्चेत्यपरम्। 'उपमानादाचारे' (३।१।१०) इत्यनुवर्तते। 'धातोः कर्मणः—' (३।१।८) इत्यतो वेति च। तदाह—उपमानादिति सान्तस्येति। उपमानभूतस्येत्यध्याहारः क्यङ्सन्नियोगशिष्ट इति। शिष्टोऽनुशिष्टः। क्यङि परतः सस्यैव लोपोऽर्थः। सूत्रदृष्ट्या सर्वत्र सान्तस्य लोपविकल्पे प्राप्ते आह—स च व्यवस्थित इति। ओजस इति श्लोकवार्तिकेनेति शेषः। इतरेषामिति—ओजोऽप्सरोवर्ज्जानामित्यर्थः। अतएव यशायते—यशस्यते इत्यादौ पदद्वयं भवति। वृत्तिविषये—इति। नामधातुत्वादत्र वृत्तिः। तथाचोक्तमन्यत्र (सर्वसमासशेषप्रकरणे) कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्चवृत्तयः। परार्थाभिधानं वृत्तिरित्यादि। ओजस्वीति—ओजस्विनि रूढ इति यावत्। तथा च ओजायत इति ओजस्वीवाचरतीत्यर्थः अनेन सलोपे कृते 'अकृत्सार्व—' (२२९८) इति दीर्घः। ङित्त्वादात्मनेपदम्। त्वयत इति। त्वमिवाचरतीत्यर्थे क्यङ्। एकार्थस्य वाचकत्वात् 'प्रत्ययोत्तरपदयोश्च' (१३७२) इति युष्मदो मपर्यन्तस्य त्वादेशः। कुमारायते इत्यादि—"क्यङ्मानिनोश्च" इति क्यङि पुंवद्भावः। हरिणीति नायं मृगीवाचकः शब्दः। किन्तु, हरिद्वर्णात्मक एतद् 'वर्णादनुदात्तात्तोपधात्तो नः' (४९५) इत्यत्रोक्तम्॥

...नुनासिकत्वं चाच् प्रत्ययस्य' प्रतिज्ञानार्थमेवोक्तवार्तिकप्रवृत्तिरात्मनेपदसिद्धिश्च तत्फलमित्याशङ्क्याह—न चेति। समाधानमाह—केवलानामेवेति। अवादुपसर्गानुपलक्षितानामेवेत्यर्थः। नन्वेवम् अवादित्यागे धातोरर्थान्तरमापद्येत। तत्राह—धातूना-मिति। उपसर्गान्तरेति। अवव्यतिरिक्तोपसर्गविशिष्टादित्यर्थः। ...वादय इति—अस्वरसोद्भावनमिदम्। तङ्निषेधरूपनियमस्यैवोचित्यादिति ...म्। अतएवाह—तङ्नेति। तथाच 'सर्वप्रातिपदिकेभ्यः—' इत्युत्तरवार्त्ति-...व सोपसृष्टादनुपसृष्टाच्च गल्भादिशब्दादपि क्विप् सिध्यति। ततश्च क्यङ् ...वेति। नियमो व्यर्थ इति भावः। नन्वेवम् अत्र वाग्रहणात् क्यङपि भवति। ...तश्च उत्तरेणैव सिद्धे पूर्ववार्त्तिकं व्यर्थम् इत्यत आह—पूर्ववार्तिकन्त्विति। ...नुबन्धासङ्गार्थमिति। अनुदात्तार्थमित्यर्थः। क्विबनूद्यत इति। अनूच्यते पश्चात् ...विधीयत इत्यर्थः। तथाच क्विप्सन्नियोगेनैव अच्प्रत्ययस्य अनुदात्तानुनासिकत्वे ...था स्यातामित्येतत् प्रतिज्ञानार्थं पूर्ववार्त्तिकं सप्रयोजनमिति भावः। तेन पद-...त्वे नेति—सुबन्तस्यैव तन्नियमात्। अतएव राजेवाचरतीत्यादौ क्विपि परे ...दत्वाभावेन नलोपाभावात् राजानतीत्यादि सिध्यतीत्यभिप्रायः। पररूपमिति। 'अतो गुणे' (१९१) इत्यनेनेत्यर्थः। एतत्तु 'अत आदे'रित्यत्र (२२४८) ...उक्तेन 'पररूपापवाद' इति स्वग्रन्थेन विरुद्ध्यते इति तत्त्वबोधिनी। अ इवेति। ...शब्देन विग्रहुच्यते। स इवेत्यर्थः। अतीत्यादि। शपा सह पररूपेण प्राग्-...म्। अत्र क्विप्प्रत्ययमादाय 'कास्प्रत्ययादाम्—' (२३०६) इत्याम् नेत्याह—...प्रत्ययग्रहणमपनीयेति। 'कास्यनेकाज्—' इति वार्त्तिकव्याख्यानावसरे एतदुक्तम्। ...अभावात् णलादौ रूपमाह—औ। अतुरित्यादि। प्रक्रियामाह—द्वित्वमित्यादि। अ+णल्=अ अ णल्=अ णल् ('अतो—')=आ णल् ('अत आदेः')=आ ...औ ('आत औ—')=औ (वृद्धिरेचि' ७२)। अन्यत् स्पष्टम्। 'अन्ये तु ...वार्त्तिकयोः प्रत्ययग्रहणमपनीयेत्युक्तत्वा अप्रत्ययान्तादेकाचोऽप्याम् भवत्येव। अ ...वाचरतीत्याचारे क्विपि लिटि—आञ्चकार—आञ्चक्रतुरित्यादीत्याहुः'—तत्त्वबोधिनी। ...वायदस ... 'सर्वप्रातिपदिकेभ्यः—' इति क्विपोऽनुत्पत्तिमाशङ्क्य

आह—लिङ्गविशिष्टपरिभाषयेति। 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि' इत्यनयेत्यर्थः। पक्षान्तरमाह—एकादेशस्येति। एतत् 'अन्तादिवच्च' (६।१।८५) इत्यत्र स्पष्टीकृतम्। हल्ङ्यादिलोप इति। 'तिसि' इत्यनयोर्लोप इत्यर्थः। साहचर्यादिति—आप इति शेषे षष्ठी। सोरिति। कर्तरि षष्ठी। अयं भावः। क्विबन्तगौरीशब्दात् ङीबन्तात् लुङि अगौरयीत् इति रूपम्। चात्र ङीबन्तात् हल्ङ्यादिना तिलोपो न। एवञ्च यथा ङीबन्तात् हल्ङ्यादिसूत्रेण तिलोपो न तथा ङीप्साहचर्यात् आबन्तादपि हल्ङ्यादिसूत्रेण तिलोपो न। एवं सिलोपेऽपि नेयम्। किन्तु हल्ङ्यादिसूत्रेण ङीबन्तादाबन्ताच्च परस्य सोरेव लोप इत्यर्थः। इट्सकाविति। 'यमरमनमातां सक् च' (७।२।७३) इत्यनेनेति बोध्यम्। धातुरेव यो धातुरिति—न तु प्रत्ययान्तो धातुरिति। 'ऋत इद्धातोः' (७।१।१००) इत्यतः 'णिचि वृद्धिः' (७।२।१) इत्यावर्तते। कैयटादय इति—यद्यपि कैयटेनैव गोशब्दादाचारक्विपि अगवयीत् इति 'गुणवृद्धी' इत्यत्रोक्तम् तथापि अरुचिकरत्वद्योतनार्थं आदिग्रहणम्। माधवमनुसृत्याह—अकवायीदिति। विरिवेति। विः पक्षी। अभिव्यक्तेर्विस्पष्टमुक्तत्वेनेत्यर्थः। वुभाव इति। न तु वुगितिभावः।

## २६६६। अनुनासिकस्य क्विझलोः क्ङिति॥ ६।४।१५।

दी—। अनुनासिकान्तस्योपधाया दीर्घः स्यात् क्वौ झलादौ च क्ङिति। इदमिवाचरति=इदामति। राजेव राजानति। पन्था इव पथीनति। मथीनति। ऋभुक्षीणति। दीव्यतेः क्विपि देवतीति माधवः। अत्र ऊठि द्यवतीतुरुचितम्। क ... कति। 'चक्री' इति हरदत्तः। माधवस्तु 'ण्यल्लोपौ' इति वचनाग्लोपं बाधित्वा अतो लोपात्—'चक्र' इति ...

माह। स्व इव स्वति। सस्वौ। सस्व। यत्तु स्वामी स्वाञ्चकार इति। तदनाकरमेव।

The penultimate or उपधा of (an अङ्ग or base ending with) अनुनासिक (म्, न् etc) becomes दीर्घ when क्वि (क्विप् or क्विन्) and झलादि क्ङित् affixes follow. Thus इदम्+क्विप्=इदाम्; then शप् तिप्—इदामति. Similarly राजानति, पथीनति etc. (But these instances, says Nagesha, are at variance with भाष्य which prohibits क्विप् from being added to हलन्त bases; cp. 'हलन्तेभ्य आचारक्विप् नास्ति'). In ऋभुक्षीणति the base is ऋभुक्षिन् (an appellation of इन्द्र)—णत्व due to ष। Some say that पथेनति is the correct form by गुण in con. with तिप्। देवति—दिव् (heaven)+क्विप्+शप् तिप्—लघूपधगुण। द्यवति—दिव्+ऊठ् etc= द्यूव् अति=द्यू अति ('लोपो व्योर्वलि' 875)=द्यो अति—द्यवति by गुण and अवादेश। क means ब्रह्मन्। चकौ—क (क्विबन्त)+णल्=चक णल्=चका णल् by 'अचो ञ्णिति' (254)=चकौ by 'आत औ—' (2371). Note that 'चकौ' derived thus by Haradatta is according to पाणिनि's परिभाषा 'विप्रतिषेधे परम्—' which has here necessitated the preference of 'अचो ञ्णिति' (7. 2. 115) to the exclusion of 'अतो लोपः' (6. 4. 48). But this is objectionable on the strength of 'मुनीनां यथोत्तरं प्रामाण्यम्' and we shall accordingly have recourse to कात्यायन according to whom, by पूर्वविप्रतिषेध, अल्लोप is to be preferred to वृद्धि here by the varttika 'णल्लोपावियङ्यण्गुणवृद्धि-दीर्घेभ्यः पूर्वविप्रतिषेधेन—as Madhava has done (and this is agreed to by Bhattoji also). Here, in the light of चक, it cannot be objected that as 'अतो लोपः' (6. 4. 48) has barred

'अचो ञ्णिति '( 7. 2. 115 ) so it will bar 'अत आदेः' (7.4.7[illegible]
so that you cannot have श्री, अतुः etc. For by 'अनन्तरस्य [illegible]
प्रतिषेधो वा', 'अतो लोपः' bars 'अङ्कत्सार्व—' ( 7. 4. 25 ) only and [illegible]
'अत आदेः' also which has been intervened by other rules
अनाकरम् i. e. not in accordance with the source which [illegible]
evendently the भाष्य of Rev. Patanjali. But Nagesha holds
that स्वामास etc. also are not at variance with the भाष्य as it does
not say 'प्रत्ययग्रहणमपनीय' etc. as Bhattoji has done in '[illegible]
प्रत्ययादाम्—' ( 2309 ). Thus प्रत्ययान्त एकाच् roots also may have
आम् etc.

मित—। अनुनासिकस्येति। 'नोपधायाः' (६।४।७) इत्यत उपधा[illegible] इत्यनुवर्त्तते। 'ढ्रलोपे—' (६।३।१११) इत्यतो दीर्घ इति च। 'अङ्कस्येत्यधिकृ[illegible] (६।४।१)। तच्च विशेष्यम्। अत—अनुनासिकस्येति विशेषणम्। विशेषण[illegible] तदन्तविधिः। किञ्च 'यस्मिन् विधिस्तदादावल् ग्रहणे' इति भाष्यः प्रत्ययविशेषणे तदादिविधिः। तदाह—अनुनासिकान्तस्येति। इदामतीत्यादि। भाष्ये तु 'हलन्ते[illegible] आचारक्विब् नास्ति' इति 'ह्रस्वनद्यापः—' (२०८—७।१।५४) इति सूत्रे स्पष्ट[illegible] नागेशः। पथीनतीति। उपधादीर्घादिदं माधवानुरोधेन। वस्तुतस्तु पथिन् [illegible] इति ( पथिन् शब्दः क्विबन्तः ) स्थिते 'इन्हन्पूषार्यम्णां शौ' (३५६) इति [illegible] उपधाया दीर्घो नान्यत्रेति निषेधात् तिपि लघूपधगुणेन पथेनतीत्येव न्याय्यमि[illegible] ऋभुक्षीणतीति। ऋभुक्षिनयं शब्द इन्द्रपर्य्याय इति कोशात्।* देवतीति। कि[illegible] दिव् शब्दाल्लघूपधगुणेनेदम्। किन्त्वत्र ऊठ् एव न्याय्य इत्याह—द्यवतीति। [illegible] द्यव् अति 'इति जाते 'लोपो व्योर्वलि' (८८३) इति वलोपे 'सार्वधातुकार्ध[illegible] (२१६८) इति गुणेनावादेशे द्यवतीति स्यात्। चकाविति—क्विबन्तात् [illegible] ( ब्रह्मवाचिनः ) णलि द्वित्वे चुत्वादिना चक णल् इति स्थिते परत्वाद 'अतो [illegible] (२५४८) इति [illegible] 'अचो ञ्णिति' (२५४—७।२।११५) इति [illegible]

णल् इति जाते 'आत औ—' (२३७१) इति णल औत्वे रूपम्। एतद्—रुचिकरमिति ज्ञापयन्नाह—माधवस्तिति। 'यथोत्तरं मुनीनां प्रामाण्य'मिति न्यायेन सूत्रकृन्मतं व्युदस्य वार्त्तिककृन्मतस्य उपादेयतया 'णलोपाचियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन' इति वार्त्तिकात् परविप्रतिषेधशास्त्रस्यात्र निरासः। ततश्च चक णल इति स्थिते वृद्धिं वाधित्वा अतो लोपे चक इति भवति। न चैवम् उ अतुरित्यादवपि 'अत आदेः' (७।४।७०) इति दीर्घं वाधित्वा 'अतो लोपः' (६।४।४८) इत्यस्य प्रवृत्त्या उ अतुरित्यादि न स्यादिति वाच्यम्। 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति न्यायाद् 'अतो लोपः' (६।४।५८ इति 'अकृत्सार्व—' (७।४।२५) इत्यस्मात् प्राप्तमेव दीर्घं वाधते न तु व्यवहिताद् 'अत आदेः' (७।४।७०) इत्यस्मात् प्राप्तमपीति माधवाशयादित्यलम्। असाकरमिति—आकरो भाष्यम्। तद्विरुद्धमिति। वस्तुतस्तु भाष्ये 'प्रत्ययग्रहणमपनीयेत्य'वंरूपव्याख्यानाभावात् प्रत्ययान्तादेकाचोऽप्यामिति नागेशः।

२६६७। भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ॥३।१।१२॥

दी—। अभूततद्भावविषयेभ्यो भृशादिभ्यो भवत्यर्थे क्यङ् स्याद्धलन्तानामेषां लोपश्च। अभृशो भृशो भवति भृशायते। 'अच्वे'रिति पर्युदासबलात् 'अभूततद्भावे' इति लब्धम्। तेनेह न। क्व दिवा भृशा भवन्ति। ये रात्रौ भृशा नक्षत्रादयस्ते दिवा क्व भवन्तीत्यर्थः। 'सुमनस्'—अस्य सलोपः। सुमनायते। चुरादौ 'संग्राम युद्धे' इति पठ्यते। तत्र 'संग्राम' इति प्रातिपदिकम्। तस्मात् 'तत्करोति—' इति णिच् सिद्धः। तत्सन्नियोगेनानुबन्ध आसज्यते। युद्धे योऽयं ग्रामशब्द स्तत्रुक्तोऽपि सामर्थ्यात् संग्रामशब्दे लब्धे विशिष्टपाठो ज्ञापयति

—* 'उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियते' इति। तेन मनःशब्दात् प्रागुत्स्वमनायत। उन्मनायते। उदमनायत। एवं चावागल्भ अवागल्भिष्ठेत्यादावप्यवेत्यस्य पृथक्करणं बोध्यम्। ज्ञापकं सजातीयविषयम्। तेन यत्रोपसर्गस्वरूपं सकलं श्रूयते त्वादेशिनापहृतं तत्रैव पृथक्कृतिः। एवं च 'आ जढ़: ओ स इवाचर्य्य ओढ़ायित्वा। अत्र 'उन्मनाय्य, अवगल्भ्य इतिवन्न ल्यप्। ज्ञापकस्य विशेषविषयत्वे षष्ठवार्तिकं तदभाव प्रमाणम्। तथाहि—'उस्योमाङ्क्ष्वाटः प्रतिषेधः' (वार्त्तिकं) उस्योमाङोश्च परयोराटः पररूपं नेत्यर्थः। उस्रामैच्छत् औस्रीयत्। औङ्कारीयत्। औटीयत्। 'आटश्च' (२६८) इति चशब्दात् पुनर्वृद्धिविधानादिदं सिद्धमिति षष्ठे स्थितम्।

The affix क्यङ् in the sense of 'to be' is attached to words of the भृशादि class—expressing the sense of अभूततद्भाव or becoming what it was not, and the final of the [illegible] or consonant-ending base of the list is dropped (in con. [illegible] क्यङ्). Thus अभृशः etc. We have got 'अभूततद्भावे' from पर्युदास or नञ्समास in 'अच्वे:' (see वार्तिक 'अभूततद्भाव इति वक्त' under 'कृभ्वस्तियोगे—' 2117—5. 4. 50). Hence here, in [illegible] etc there is no क्यङ्. भृश here means the star. तत्र i. e.

---

* ग्रामशब्दस्य धातुसंज्ञात्वाभावात् समित्यस्य उपसर्गसंज्ञाविरहत्वेन उप[illegible] समानाकारमित्युक्तम्। किञ्च 'कृतिग्रहण' इति समास इत्याह—पूर्वपदं

संग्राम युद्धे the word संग्राम is a प्रातिपदिक and not a root. After this word संग्राम we have णिच् by the गणसूत्र 'तत् करोति तदा-चष्टे—'. And in conection with this णिच् the अनुबन्ध—अ is attached (after the म् of the base संग्राम so that by 'अतो लोपः' (2308) and 'णौ चङ्युपधायाः—' (2314) there is no उपधाह्रस्व in 'ससंग्रामत' due to अग्लोपित्व. Thus for the sake of this अनुबन्ध the base संग्राम is read in चुरादि). Though it has been said that the base ग्राम alone can express the sense of war (युद्ध) and thus by implication we could have संग्राम as well yet the special reading 'संग्राम युद्धे' suggests that a preceding word looking like an उपसर्ग is segregated (as अव—गल्भ) when such an affix as conditions धातुसंज्ञा (of the base—as क्यच्, क्यङ् etc.) is intended (to attach). Hence the augment अट् is prefixed to the word मनस् (and not before सु of the base सुमनस्—a god). Thus it is to be understood that अव is set apart in अवागल्भत (लङ्) etc. And a suggestion or ज्ञापक being subject to a class (जाति) in general—the segregation (पृथक्कृति) takes place only when the उपसर्ग is heard in full i. e. stands unchanged, but not when it undergoes any change due to आदेश i. e. एकादेश. Thus like उन्मनाय्य etc. there is no ल्यप् in ओढ़ायित्वा where the उपसर्ग आ has been changed to 'ओ' by एकादेश। As to the reference to a particular subject (as this—ओढ़ायित्वा) on the part of a ज्ञापक we have for authority the varttika and its Bhasya in the sixth chapter (of अष्टाध्यायी). Compare (the varttika) 'उस्योमाङ्क्ष्—' under the rule 'ओमाङोश्च' (५०) which

( the varttika ) means that the aug. आट् does not get when उस्, ओम् and आङ् follow. Thus in उस्राम् etc. he a cow—औस्रीयत् etc. there is वृद्धि by 'आटश्च' ( 269 ). the सूत्रकार also is another authority to this विशेषविधान enunciating 'आटश्च' whereof the word 'च' has been expl by the Bhashyakara in the sixth chapter to be intend effect वृद्धि for the second time so that पररूप cannot when अच् follows.

मित—। भृशादिभ्य इति। [ भृश, शीघ्र, चपल, मन्द, पण्डित, सुमनस्, दुर्मनस्, अभिमनस्, उन्मनस् रहस् रोहत्, रेहत्, संश्चत्, शश्वत्, भ्रमत्, वेहत्, शुचिस्, शुचिवर्चस् अण्डर वर्चस्, ओजस्, सुरजस्, —एते भृशादयः ]। सूत्रे 'भुवि' इत्यस्य विवरणम्—भवत्यर्थ इति। भवनं भावे क्विप्। तस्मिन्—भवने इत्यर्थः। 'कर्तुः क्यङ्—' ( ३।१।११ ) वर्त्तते। तदाह—क्यङ् इत्यादि। ननु अभूततद्भावविषयेभ्यः इति सूत्रे न तत् कुत इदमित्यत आह—अच्वेरिति। 'कृभ्वस्तियोगे सम्पद्यकर्त्तरि (२११७) इत्यत्र पठितात् 'अभूततद्भाव इति वक्तव्यम्' इति वार्तिक भावः। क्व दिवा भृशा इति—कैयटग्रन्थादिदम्। अभूततद्भाव भृशीभवति। सुमनायते इति—सलोपात् 'अकृत्—' ( २२९८ ) इति तवेति। चुरादावित्यर्थः। प्रातिपदिकमिति। न तु धातुरिति भावः। दिति—संग्रामशब्दादित्यर्थः। नन्वेवं प्रातिपदिकत्वेनैव णिचि सिद्धे न्तर्गतकथादावस्य पाठो व्यर्थ इत्यत आह—तत्सन्नियोगेनेति। णिचः नेत्यर्थः। अनुबन्ध आसज्यत इति। मकाराद्ध योऽकार श्रूयते सोऽनुदात्त प्रतिज्ञायत इत्यर्थः। ततश्चानुदात्तानुबन्धासङ्गार्थोऽयं णिच्प्रत्यय इति एवञ्च असस‌ङ्ग्रामत इत्यत्र णिचि परतः 'अतो लोपः' ( २३०८ ) इति 'णौ चङ्युप—' ( २३१४ ) इत्युपधाह्रस्वो न प्रवर्तते। अग्लोपित्वात्

—' (२५७२) इति निषेधात्। तत्त्वबोधिनीकारास्तु 'मकारादकाराद्द भिन्नोऽयमकारानुबन्धः क्रियते' इति वदन्ति। तच्चिन्त्यम्, 'संग्राम युद्धे' इत्यस्य—व्याख्यानावसरोक्तखग्रन्थविरोधात् अधिककल्पने गौरवाच्चेत्यलम्। युद्धेऽप्ययं ग्रामशब्द इति। अयमभिप्रायः—'ग्रसेरा च' इत्यौणादिकेन मन्प्रत्ययेन निष्पन्नस्य ग्रामशब्दस्य 'कृत्तद्धितसमासाश्च' (१७९) इति प्रातिपदिकत्वम्। अव्युत्पत्तिपक्षे च 'अर्थवदधातुरप्रत्ययः' (१०८) इति प्रातिपदिकत्वम्। तदेवं 'ग्राम युद्धे' इत्युक्तेऽपि केवलस्य ग्रामशब्दस्य युद्धे प्रयोगाभावेन, सामर्थ्यात् संग्रामशब्दादेव णिजुत्पद्यते। एवं तर्हि 'संग्राम युद्धे' इति विशिष्टपाठोऽत्र ज्ञापक इत्याह—विशिष्टपाठो ज्ञापयतीति। धातुसंज्ञाप्रयोजक इति। क्विबादावित्यर्थः। तेनेत्यादि। सुगमम्। सजातीयविषयमिति। समानजातीयकमित्यर्थः। अत्र व्यावर्त्तकमाह—तेन यथेति। सकलं श्रूयत इति। अपरिवर्त्तितं तिष्ठति विकारं न भजत इत्यर्थः। आदेशेनापह्नतमिति। एकादेशेन पररूपरूपेण अपह्नतं तिरोभावितम् इत्यर्थः। अतएव ओढायित्वेत्यत्र ल्यप् नेति दर्शयति। एवं चेति। ननु 'यत्र उपसर्गरूपम्—' इत्यादिविशेषविषयज्ञापने किं मानमित्यत आह—षष्ठवार्त्तिकं तद्भाष्यञ्च प्रमाणमिति। 'ओमाङोश्च' (६।१।९५) इति षष्ठाध्यायस्य भाष्य-वार्त्तिकम् इत्यर्थः। उस्योमाङ्क्ष्विति वार्त्तिकम्। उसि + ओम् + आङ्सु + आट इति वार्तिकच्छेदः। अर्थमाह—उस्योमाङोश्चेति। उसि परे, ओमाङोश्च परयोरिति तदर्थः। उस्रामिति—'माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी' त्यमरः। औस्रीयदिति। उक्तवार्तिकाभावे तु 'उस्रपदान्ता'दिति पररूपे उस्रीयदित्यनिष्टं स्यादिति ध्येयम्। न 'चार्थवद्ग्रहणे अनर्थकस्ये'ति न्यायादत्र पररूपं न स्यादिति वाच्यम्। तस्यानित्यत्वात्। 'क्यचि च' (२६५८) इति क्यजन्तस्य उस्राय-शब्दस्य आकारस्य ईत्त्वम्। एवमोङ्कारमात्मन इच्छतीति औङ्कारीयदित्यादि। उदाहरणत्रयमिदं भाष्यारूढम्। न केवलं वार्तिकं भाष्यं चात्र मानं किन्तु सूत्रमपीत्याह—आटश्चेति चशब्देनेति। एतच्च आटोऽचि परे वृद्धिरेव यथा स्यान्न तु पररूपमिति—औमाङ्भिः इति 'आटश्च' ति सूत्रे भाष्ये स्थितमित्यलम्।

२६६८। लोहितादिडाज्भ्यः क्यष् ॥७।१।१३॥

दी—। लोहितादिभ्यो डाजन्ताच्च भवत्यर्थे क्यष् स्यात्।

Eng.—Easy.

मित—। लोहितेति। परवर्ति सूत्रमिदं तदाह—भवत्यर्थ इत्यादि। लोहितादयश्च—[ लोहित, चरित, नील, फेण, मद्र, हरित, दास, मन्द इति ]—लोहितादिराकृतिगणः।

२६६९। वा क्यषः ॥१।३।९०॥

दी—। क्यषन्तात् परस्मैपदं वा स्यात्। लोहितायति-लोहितायते। अत्र अच्वेरित्यनुवृत्त्या अभूततद्भावविषयत्वं लब्धम्। तच्च लोहितशब्दस्यैव विशेषणम्। न तु डाचोऽसम्भवात्। नाप्यादिशब्दग्राह्याणाम्। तस्य प्रत्याख्यानात्। तथा वार्तिकम्—'लोहितडाज्भ्यः क्यष्वचनं, भृशादिष्वितराणि' इति। न चैवं काम्यच इव क्यषोऽपि ककारः श्रूयेत। उच्चारणसामर्थ्यादिति वाच्यम्। तस्यापि भाष्ये प्रत्याख्यानात्। पटपटायति—पटपटायते। कृभ्वस्तियोगं विनापीह डाच्। डाजन्तात् क्यषो विधानसामर्थ्यात्। यत्तु—

लोहितश्यामदुःखानि हर्षगर्वसुखानि च।
मूर्च्छानिद्राकृपाधूमाः करुणा नित्यचर्मणी ॥

इति पठित्वा श्यामादिभ्योऽपि क्यषि पदद्वयमुदाहरन्ति। तद् भाष्यवार्तिकविरुद्धम्। तस्मात्तेभ्यः क्यङेव। श्यामायते। दुःखादयो वृत्तिविषये—तद्वति वर्तन्ते। लिङ्गविशिष्टपरिभाषया लोहिनीशब्दादपि—क्यष्। लोहिनीयति—लोहिनीयते।

Eng.—Easy. तच्च etc. i.e. the term 'अभूततद्भावविषये' qualifies the word लोहित only and none derived with डाच्—which is impossible डाच् being added to a base in the sense of imitating an inexplicable word. Nor does it qualify the words to be accepted by the term आदि in the rule. For it ( आदि ) has been rejected in the भाष्य. Compare the varttika—'लोहितडाज्भ्यः—' which does not contain the word आदि. The meaning of the varttika is this —'the statement of क्यष् ( is to be understood after ) लोहित and डाजन्त words, and the other words as श्याम, दुःख, चरित, फेन etc. should be read under भृशादि class ( so that they may have क्यङ् only by 'भृशादिभ्यः—' 2697 ). Nor can it thus be agreed that the ककार of क्यष् like that of काम्यच् will be heard on the score of the pronunciation. For the ककार also of क्यष् has been set aside or left out in the भाष्य। In पटपटायति etc—here there is डाच् without the application of कृ, भू or अस् ( cp.—'कृभ्वस्तियोगे—' 2117 ) on the strength of the injunction of क्यष् after डाजन्त words. And that others reading the words लोहित, श्याम, दुःख etc. (enumerated in the following verse) illustrated both the पद्s i. e. परस्मै and आत्मने. in क्यष् coming after श्याम etc.—is at variance with भाष्य and वार्तिक. Thus after them (श्याम etc.) the affix क्यङ् only will take place (and not क्यष् also). The bases दुःख etc. ( enumerated in the above sloka ) imply one having them अदुःखो दुःखो भवति दुःखायते in the sense of अदुःखी दुःखी भवति etc ). By the परिभाषा 'प्रातिपदिकग्रहणे—' the affix क्यष् will be added to the feminine base लोहिनी also, लोहिनीयति—लोहिनीयते।

मित—। वेति। 'शेषात् कर्तरि परस्मैपदम्' (१।३।७८) इत्यतः परस्मै-मित्यनुवर्तते। तदाह—क्यषन्तादित्यादि। तच्चेति, अभूततद्भावविषयत्वमि-न तु डाच इति। 'अव्यक्तानुकरणाद् द्व्यजवरार्द्धादनितौ डाच्' (२१२८) इत्यनु-करण एव डाचो विधानादिति भावः। आदिशब्दग्राह्याणामिति। लोहि-लोहितगणपठितानां तथा लोहितादेराकृतिगणत्वादुत्तरश्लोकपठितानाञ्च ग्रहणा-आदिशब्दप्रत्याख्यानपरं वार्तिकमाह—लोहितडाज्भ्य इति। 'लोहितादिडा-क्यष्' इति यः क्यष् विधीयते स लोहितशब्दादेव डाजन्तशब्दादेव च विधेयं-बोद्धव्यम्। तथा लोहितादिगणे—लोहितशब्दवर्ज्ज' ये पठ्यन्ते ते लोहितेतराः भृशादिगणे पठनीया इति वार्तिकार्थः। ततश्च लोहितेतरेभ्यः श्यामादिभ्यो भृशादि-क्यङेव न तु क्यषपि इत्यनुपदमेव वक्ष्यते। वृत्तिकारस्तु "यानि लोहितादिषु-तेभ्यः क्यङेव। अपरिपठितेभ्यस्तु क्यषेव भवन्ति" इत्याह। तस्यापीति। आदिश-क्यषः ककारस्यापि भाष्ये प्रत्याख्यातत्वादित्यर्थः। पटपटायति इति। वा क्यष-पदविकल्पः। पटत् इति शब्दः 'अव्यक्तानुकरणात्—' (२१२८) इति-'डाचि विवक्षिते द्वे बहुलम्' (वार्तिक) इति द्वित्वम्। 'तस्य परमाम्रेडि-(सू—८७) इत्युत्तरस्याम्रेडितत्वम्। 'नित्यमाम्रेडिते डाचीति वक्तव्यम्' वार्तिक—इति पूर्वपरयोर्वर्णयोः पररूपेण—तकारपकारयोः पकारः। डाचो डि-उत्तरखण्डे टिलोपेन पटपटाय इति भवति। ततः शप्तिवादयः। क्यष्वचनमत्र-कृभ्वस्तियोगाभावेऽपि डाजित्याह—कृभ्वस्तीत्यादि। यत्त्विति। अत्र पठितस्य ग्र-तद्भाष्यवार्तिकविरुद्धमित्यत्तरेण तच्छब्देनान्वयः लोहितश्यामेति। अत्र इ-लोहितादेराकृतिगणत्वात् केचिच्छब्दा एव समाक्रियन्ते। अतएवाह: क-पदद्वयमिति—परस्मैपदमात्मनेपदमित्यर्थः। श्यामायते इति। श्याम-क्यषोऽभावात् परस्मैपदं नेति भावः। तद्वतीति। दुःखी, हर्षी, गर्वीत्यादि-इत्यर्थः। 'अर्शआदिभ्योऽच्' इत्यच्प्रत्ययोऽत्र बोध्य इति भावः। लिङ्गविशिष्ट-भाषयेति। 'प्रातिपदिकग्रहणे लिङ्ग—' इत्यनयेत्यर्थः। लोहिनीयति। वर्णादनु-

—' (४८६) इति नश्च न:।

२२७० । कष्टाय क्रमणे ॥३।१।१४॥

टी—। चतुर्थ्यन्तात् कष्टशब्दादुत्साहेऽर्थे क्यङ् स्यात्। कष्टाय क्रमते कष्टायते। पापं कर्तुमुत्सहत इत्यर्थः। 'सत्त्र-कक्ष-कष्ट-कृच्छ्र-गहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम्' (वार्तिक)। कण्वं पापम्। सत्त्रादयो वृत्तिविषये पापार्थाः। तेभ्यो द्वितीयान्तेभ्यश्चिकीर्षायां क्यङ्। पापं चिकीर्षतीत्य-स्वपदविग्रहः—सत्त्रायते। कक्षायते इत्यादि।

The affix क्यङ् is used, in the sense of (showing) energy or effort, after the word कष्ट ending in dative. Thus कष्टाय etc. i.e. shows energy for committing sin. 'सत्त्रकक्ष etc—'वार्त्तिक—. It has to be stated that क्यङ् takes place after सत्त्र, कक्ष, कष्ट, कृच्छ्र and गहन in the sense of having a mind for doing iniquity or sin. The words सत्त्र etc in the matter of वृत्ति or being formed as सत्त्रायते etc. mean iniquity. क्यङ् takes place after them ending in the accusative. And the विग्रह or the sentence explaining the वृत्ति such as चिकीर्षति is अस्वपदविग्रह or abnormal for the word सत्त्र steps into the room of पाप which was used to express the sense only.

मित—। कष्टायेति। चतुर्थीविभक्त्यन्तादेव कष्टशब्दात् क्यङ् यथा स्यादित्येवमर्थं चतुर्थ्या निर्देशः। 'वृत्तिसर्गतायनेषु क्रमः' इत्यात्मनेपदविधायकसूत्रेऽर्थे' इति सर्वैरेव उत्साहार्थकत्वेन व्याख्यातम्। अतः क्रमणे इत्युत्साहे इत्यर्थः। 'स्वरितेनाधिकार' इति 'कर्त्तुः—' (३।१।११) इत्यतः क्यङेवानुवर्त्तते न तु 'लोहितादि—' (३।१।१३) इत्यतः क्यष् इत्यपि। तस्यास्वरितत्वात्।

न आह—चतुर्थ्यन्तादित्यादि। पापं कर्त्तुमिति। कष्टायेति क्रियार्थोपपदा

चतुर्थीति भावः। अत्यल्पमिदमिति मन्वानो वार्त्तिककृदाह—' सत्रकक्ष—' ...
अर्थौ मूले। वृत्तिविषये इति। तथाच सत्रायते, कक्षायते इत्यादेः पापं ...
यतीत्यर्थः। द्वितीयान्तेभ्य इति। चिकीर्षायां द्वितीयान्तस्यैव अन्वययोग्यत्वा...
मुक्तम्। विग्रहान्तर्गतशब्दानां वृत्तावभावादाह—अस्वपदविग्रह इति। कष्टशब्दो...
यत्र पापार्थकावेव न तु दुःखार्थकौ। तेन 'अजः कृच्छ्रं कष्टं वा क्रामती'त्यत्र न ...

## २६७१। कर्मणो रोमन्थतपोभ्यां वर्तिचरोः ॥३।१।१५॥

दो—। रोमन्थतपोभ्यां कर्मभ्यां क्रमेण वर्तनायां चरे... चार्थे क्यङ् स्यात्। रोमन्थं वर्तयति रोमन्थायते। 'हनुचल... इति वक्तव्यम्' (वार्तिक)। चर्वितस्याकृष्य पुनश्चर्वणमित्यर्थ... नेह। कीटो रोमन्थं वर्तयति। अपानप्रदेशान्निःसृतं द्रव्यमि... रोमन्थः। तदश्नातीत्यर्थं इति कैयटः। वर्तुलं करोतीत्य... इति न्यासकारहरदत्तौ। 'तपसः परस्मैपदं च' (वार्तिक)। तपश्चरति = तपस्यति।

The affix क्यङ् is used after the words रोमन्थ and तपस् both ending in the accusative in the sense of वर्तन or ... cause and चरण or performance respectively. हनुचलन ... वार्त्तिक which means that the above saying holds good ... when हनुचलन or the movement of the jaws in order to che... again what has been chewed is meant. Thus here in ... रोमन्थम् etc there is no shortening. अपानप्रदेश means the anus ... वर्तुलम् etc to shape it round. तपस्यति—क्यङ् yet परस्मैपदी।

मित—। कर्मण इति। रोमन्थतपोभ्यामिति पञ्चमी। तेन सामर्थ्या... करणात् कर्मण इत्यपि पञ्चमी। ... एकवचनम्। वर्तिरिति। ...

घातीत्यर्थं त्वान्निपातने क्विन्। यद्वा 'इक्‌श्तिपौ धातुनिर्द्देशे' इति वार्त्तिकादिक्। चर् इति चरतेः सम्पदादित्वात्भावे क्विप्। आवर्त्तनं निष्पादनस्यार्थः। काङ् इति वर्त्तते। तदाह—रोमन्थतपोभ्यामित्यादि। भाष्ये उद्गीर्णस्य निगीर्णस्य वा मन्थो रोमन्थः इत्युक्तम्। अवोद्गीर्णमिति कण्ठद्वारा निःसारणम् निगीर्णमिति तु अपानप्रदेश-द्वारा (गुह्यमार्गेण) निःसरणम् इत्यर्थः। 'हनुचलन—' इति। वार्त्तिकमिदम्। चर्वः-स्पष्टौ मूले। वर्तुलमिति गोलाकारं पिण्डं करोतीत्यर्थः। 'तपसः—' एतेनैव वार्त्तिकेन काङि सत्यप्यत्र तङ् न।

२६७२। वाष्पोष्मभ्यामुद्वमने ॥३।१।१६॥

दी—। आभ्यां कर्मभ्यां काङ् स्यात्। वाष्पमुद्वमति वाष्पायते। ऊष्मायते। 'फेनाच्चेति वाच्यम्' (वार्तिक)। फेनायते।

Eng.—Easy.

मित—। स्पष्टेऽत्र सूत्रवृत्ती।

२६७३। शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ॥३।१।१७॥

दी—। एभ्य कर्मभ्यः करोत्यर्थे काङ् स्यात्। शब्दं करोति शब्दायते। पक्षे 'तत्करोति—' (गणसूत्र) इति णिजपीष्यत इति न्यासः। शब्दयति। 'सुदिनदुर्दिन-नीहारेभ्यश्च' (वार्तिक)। सुदिनायते।

After these (words) ending in the accusative is used काङ् in the sense of 'to do'. शब्दायति may be taken as an alternative, says the Nyasa (of Jinendra buddhi) with णिच् coming in by the ganasutra 'तत्करोति—'. 'सुदिनदुर्दिन etc—' वार्त्तिक।

मित। शब्दवैरेति। 'कर्मणः' (३।१।१५) इत्यतः कर्मण इति वर्त्तते।

'कर्त्तुः क्यङ्—' (३।१।११) इत्यतः क्यङ् इति च। तथा 'करणे' क्रियायाः ग्राहकं न तु साधकतमार्थकस्य। तदाह—एभ्यः कर्मभ्यः न्यास इति—न्यास इति नामग्राहमुच्चारणम् अवारुचिज्ञापकम्। णिच्प्रत्ययस्य भाष्यानारूढत्वमिति नागेशः। 'सुदिनदुर्दिन—' इति— मिदम्। एभ्यः कर्मभ्यः करोत्यर्थे—क्यङित्यर्थः।

## २६७४। सुखादिभ्यः कर्त्तृवेदनायाम् ॥३।१।१८॥

टी—। एभ्यः कर्मभ्यो वेदनायामर्थे क्यङ् स्यादि कर्त्तुरेव चेत् सुखादीनि स्युः। सुखं वेदयते सुखायते 'कर्तृग्रहणं' किम्? परस्य सुखं वेदयते।

After these (सुख, दुःख etc) is used the affix क्यङ् in sense of cognition—provided सुख, दुःख etc belong to cogniser himself. Thus सुखं वेदयते—cognises or feels pleas परस्य etc—here the pleasure does not belong to the agent.

मित—। सुखादिभ्यः इति। [ सुख, दुःख, तृप्त (तृप्र?) गहन, कृ अस्र, अलीक, प्रतीप, करुण, कृपण, सोढ—एते सुखादयः ]। अनुवृत्तिः प्र षत्। कर्त्तृ इति पृथक्पदम् लुप्तषष्ठीकम्। वेदना च तदपेक्षिणीत्याह—वेद कर्तुरेव चेदिति। वेदनेति—विद चेतनाख्याननिवासेष्विति चौरादिकात् निष्पन्नं ज्ञानञ्च तदर्थः। वेदयत इति—जानातीत्यर्थः। परस्येति। इह सुखं तद्भिन्नो वेदनाकर्त्तेति वाक्यमेव।

## २६७५। नमोवरिवश्चित्रङः क्यच् ॥३।१।१९॥

टी—। 'करणे' इत्यनुवृत्तेः क्रियाविशेषे पूजायां परिचर्य्यायामाश्चर्य्ये च। नमस्यति देवान्। पूजयतीत्यर्थः।

वरिवस्यति गुरून् । शुश्रूषत इत्यर्थः । चित्रीयते । विस्मयत इत्यर्थः । विस्मापयत इत्यन्ये ।

The affix क्यच् is used (optionally) after the words नमस् वरिवस् and चित्रङ् respectively in the sense of particular affairs of worship, service or attendance and astonishment due to the अनुवृत्ति or presence of the term 'करणे' from the previous rule 'शब्दवैर—' (2673). Thus नमस्यति देवान् etc चित्रीयते—it is आत्मनेपदी because चित्रङ् is ङित् and the ईकार is provided for by 'क्यचि च' (2658). इत्यन्ये e.g. in Bhatti we have 'ततश्चित्रीयमाणोऽसौ' where असौ refers to the ellusive stag (मायामृग) and चित्रीयमाण means causing astonishment (on the part of Rama).

मित—। नमोवरिव इति । नमस्, वरिवस्, चित्रङ् इत्येषां समाहार-द्वन्द्वात् पञ्चम्येकवचनम् । करण इत्यनुवृत्तेरिति । 'शब्दवैर—' (३।१।१३) इत्यत इति भावः । करणं क्रिया । सा चात्र क्रियाविशेषस्य ग्राहिका । तदाह—क्रिया विशेषे इति । क्रियाविशेषे इति विशेषणम् पूजायामित्यादौ प्रत्येकमभिसम्बध्यते । तेन पूजात्मिकायाम्, परिचर्य्यात्मिकायाम्, आश्चर्य्यात्मिकायाञ्च क्रियायामित्यर्थः । तच्च—'नमसः पूजायाम्' । 'वरिवसः परिचर्य्यायाम्' । 'चित्रङ आश्चर्ये' इति वार्तिकवचनाल्लभ्यते । नमस्यतीति । नान्तमेव 'क्यि' पदमित्युक्तत्वान्न रुत्वविसर्गौ । चित्रीयत इति । चित्रङो ङित्त्वात् तङ् । 'क्यचि च' (३६५८) इति ईत्त्वम् । विस्मापयत इत्यन्ये इति । तथा च भट्टिः—'ततश्चित्रीयमाणोऽसौ' इति । 'असौ मायामृगश्चित्रीयमाणो विस्मयमुत्पादयन्नित्यर्थः' इति तत्त्वबोधिनी ।

२६७६ । पुच्छभाण्डचीवराण्णिङ् ॥३।१।२०॥

टी—। 'पुच्छादुदसने व्यसने पर्यसने च' (वार्तिक)।

विविधं विरुद्धं वोत्क्षेपणं व्यसनम्। उत्पुच्छयते। विपुच्छयते। परिपुच्छयते। 'भाण्डात् समाचयने' (वार्तिक)। सं-भाण्डयते। भाण्डानि समाचिनोति। राशीकरोतीत्यर्थः। समवभाण्डत। 'चीवरादर्जने परिधाने च' (वार्तिक)। सञ्चीवरयते भिक्षुः। चीवराण्यर्जयति, परिधत्ते वेत्यर्थः।

The affix णिङ् is used after the words पुच्छ, भाण्ड and चीवर (a rag) under the particular senses expressed in the varttikas 'पुच्छात्—', 'भाण्डात्—' and 'चीवरात्—'. उत्पुच्छयते etc i.e. wags or moves the tail in various or objectionable ways. समवभाण्डत—सम्—भाण्ड+णिङ्+चङ् (लुङ्) +त, अट् comes in before भाण्ड by the saying 'उपसर्गसमानाकारम्—' see आत्मनेपद due to ङित्त्व of णिङ् and चङ् due to the retension of which is the common name for णिच् and णिङ्. Thus 'णि—' (2312) and 'णेरनिटि' (2313) apply here.

मित—। पुच्छभाण्डेति। पूर्ववदत्र समासविभक्ती। 'करणे' इत्यनुवर्तते। एभ्यः कर्मभ्यः क्रियाविशेषेषु उदसनव्यसनपर्यसन—समाचयन—अर्जनपरिधानेषु णिङ् स्यादित्यर्थः। उत्पुच्छयत इति। पुच्छं विविधं विरुद्धं वोत्क्षिपतीत्यर्थः। एतच्च 'पुच्छात्—', भाण्डात्—', 'चीवरात्—' इति वार्तिकत्रयम्। समवभाण्डत इति। लुङि पूर्वाद् णिङन्ताद् भाण्डशब्दात् 'णिश्रि—' (२३१२) इति चङ्। 'चङि' इति द्वित्वे ह्रस्वादिति। 'णेरनिटि' (२३१३) इति णिलोपः। 'उपसर्गसमानाकारं पूर्वपदं संज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियत' इत्युक्तात् संशब्दात् परस्तादट्। कश्चित्तु 'उपसर्ग—' इत्युद्धृत्य संभाण्डशब्दात् कारणीत्याह। तदयुक्तम्। ... मात्रं प्रति तस्यात्र निमित्तत्वात्। णिङ् इत्यनेनैवात्मनेपदसिद्धेश्च। ङकारोच्चारणं 'णेरनिटि' इति णिङ्णिचोः सामान्यग्रहणार्थं इति ... ।

ञकारस्यैव तत्र सामर्थ्यान्न तु ङकारस्य। तस्यात्मनेपदसिद्धिरेव फलमन्यथा णिचमेव विदधीतेत्यलमुपजीव्य-छिद्राविष्करणेन। 'चीवरादर्जने' इत्यपि वार्तिकमिति क्वचित्।

२६७७। मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् ॥३।१।२१॥

दो—। कृञर्थे। मुण्डं करोति मुण्डयति। 'व्रताद्भोजनतन्निवृत्त्योः' (वार्तिक)। पयः शूद्रान्नं वा व्रतयति। 'वस्त्रात् समाच्छादने' (वार्तिक)। संवस्त्रयति। हल्यादिभ्यो ग्रहणे' (वार्तिक)। 'हलिकल्योरदन्तत्वं च' (वार्तिक)। हलिं कलिं वा गृह्णाति हलयति। कलयति। महद्धलं हलिः। परत्वाद् वृद्धौ सत्यामपीष्ठवद्भावेन अगेव लुप्यते। अतः सन्वद्भावदीर्घौ न। अजहलत्। अचकलत्। कृतं गृह्णाति कृतयति। तूस्तानि विहन्ति वितूस्तयति। तूस्तं केशा इत्येके। जटीभूताः केशा इत्यन्ये। पापमित्यपरे। मुण्डादयः 'सत्यापपाश—' (२५६२) इत्यत्रैव पठितुं युक्ताः। 'प्रातिपदिकाद्धात्वर्थे—' (गणसूत्र) इत्येव सिद्धे केषाञ्चिद् ग्रहणं सापेक्षेभ्योऽपि विजयम्। मुण्डयति माणवकम्। मिश्रयत्यन्नम्। श्लक्ष्णयति वस्त्रम्। लवणयति व्यञ्जनमिति। हलिकल्योरदन्तत्वार्थम्। सत्यस्यापुगर्थम्। केषाञ्चित्तु प्रपञ्चार्थम्। सत्यं करोत्याचष्टे वा सत्यापयति। 'अर्थवेदयोरप्यापुग्वक्तव्यः' (वार्तिक)। अर्थापयति। वेदापयति। पाशं विमुञ्चति

विपाशयति। रूपं पश्यति रूपयति। वीणयोपगायति-
प्रवीणयति। तूलेनानुकुष्णात्यनुतूलयति। तृणाग्रं तूलेनानु-
घट्टयतीत्यर्थः। श्लोकैरुपस्तौति उपश्लोकयति। सेनयाभियाति-
अभिषेणयति। 'उपसर्गात् सुनोति—' (२३७०) इति षः।
अभ्यषेणयत्। 'प्राक्सितात्—' (२२७६) इति षः। अभिषिषे-
णयिषति। 'स्थादिष्वभ्यासेन च—' (२२७७) इति षः।
लोमान्यनुमार्ष्टि अनुलोमयति। 'त्वच संवरणे'—घः। त्वचं
गृह्णाति त्वचयति। चर्मणा संनह्यति सञ्चर्मयति। वर्णं
गृह्णाति वर्णयति। चूर्णैरवध्वंसते = अवचूर्णयति।
इष्टवदित्यतिदेशात् पुंवद्भावादयः। एनीमाचष्टे
एतयति। दरदमाचष्टे दारदयति। पृथुं प्रथयति।
वृद्धौ सत्यां पूर्वं वा टिलोपः। अपिप्रथत्—अपप्रथत्।
मृदुं म्रदयति। अमिम्रदत्—अमम्रदत्। भृशं कृशं दृढं
भ्रशयति क्रशयति द्रढयति। अबभ्रशत्। अचक्रशत्। अदद्रढत्।
परिव्रढयति। पर्यवव्रढत्। ऊढिमाख्यत्। औजिढत्।
ढत्वादीनामसिद्धत्वाद् हृतिशब्दस्य द्वित्वम्। 'पूर्वत्रासिद्धीय-
मद्वित्वे' (परि—) इति त्वनित्यमित्युक्तम्। 'ढिशब्दस्य द्वित्व-
मित्यन्ये—औडिढत्। ऊढमाख्यत् औजढत् औडढत्।
'ओः पुयण्—' (२५७७) इति वर्गप्रत्याहारजग्रहो लिङ्गं 'द्विर्वचने
कार्ये णावच आदेशो ने'ति जनयतावुक्तम्॥ 'प्रकृत्यैकाच्'
(२०१०)। वृद्धिपुकौ। स्वापयति। त्वां मां वा आचष्टे त्वापयति
मापयति। मपर्यन्तस्य त्वमौ। परत्वात् पूर्वं टिलोपः। टिलोपे

वृद्धिपुकौ। त्वादयति मादयति इति तु न्याय्यम्। अन्तरङ्गत्वात् पररूपे कृते 'प्रकृत्यैकाच्' (२०१०) इति प्रकृतिभावात्। न च प्रकृतिभावो भाष्ये प्रत्याख्यात इति भ्रमितव्यम्। भाष्यस्य प्रेष्ठाद्युदाहरणविशेषेऽन्यथासिद्धिपरत्वात्। युवामावां वा युष्मयति अस्मयति। श्वानमाचष्टे श्वावयति। 'नस्तद्धिते' (६७९) इति टिलोपः। प्रकृतिभावस्तु न। येन नाप्राप्तिन्यायेन 'टेः' (१७८६) इत्यस्यैव बाधको हि सः। भत्वात् सम्प्रसारणम्। अन्ये तु 'नस्तद्धिते' (६७९) इति नेहातिदिश्यते। इष्ठनि तस्यादृष्टत्वात्। ब्रह्मिष्ठेत्यादौ परत्वात् 'टेः' (१७८६) इत्यस्यैव प्रवृत्तेः। तेन शुनयतीति रूपमाहुः। विद्वांसमाचष्टे विद्वयति। अङ्गवृत्त-परिभाषया सम्प्रसारणं नेत्येके। सम्प्रसारणे वृद्धावावादेशे च विदावयतीत्यन्ये। नित्यत्वाट्टिलोपात् प्राक् सम्प्रसारणम्। अन्तरङ्गत्वात् पूर्वरूपं टिलोपः। विदयतीत्यपरे। उदञ्चमाचष्टे उदीचयति। उदेचिचत्। प्रत्यञ्चं प्रतीचयति। प्रत्यचिचत्। 'इकोऽसवर्णे—' (९१) इति प्रकृतिभावपक्षे—प्रति अचिचत्। सम्यञ्चमाचष्टे समीचयति। सम्यचिचत्—समिअचिचत्। तिर्यञ्चमाचष्टे तिराययति। अञ्चेष्टिलोपेनापहारेऽपि बहिरङ्गत्वेनासिद्धत्वात्तिरसस्तिरिः। 'असिद्धवदत्र—' (२१८३) इति चिणो लुङ्न्यायेन प्रथमटिलोपोऽसिद्धः। अतः पुनष्टिलोपो न। अङ्गवृत्त-परिभाषया वा। चङ्यग्लोपित्वादुपधाह्रस्वो न। अतितिरायत्। [illegible]माचष्टे सभ्राययति। अससभ्रायत्। विष्वद्र्यञ्चम् अवि-

विष्वद्र्यायत्। देवद्र्यञ्चम् देवद्र्‌यायति, अदिदेवद्र्यायत्। अदद्र्यञ्चम् आददद्र्यायत्। अदमुयञ्चम् अदमुआययति। आददमुआयत्। असुमुयञ्चम् असुमुआययति। चङ्। आसुमुआयत्। भुवं भावयति, अबोभवत्। भ्रुवम् अबुभ्रवत्। श्रियम् अशिश्रयत्। गाम् अजूगवत्। रायम् अरीरयत्। नावम् अनूनवत्। स्वश्वं स्वाश्वयत्, स्वः। अव्ययानां भमात्रे टिलोपः = स्वयति। असस्वत्—असिस्वत्। बह्वन् भावयति। बह्वयतीत्यन्ये। विन्मतोरिति लुक् *। स्रग्विणं स्रजयति। संज्ञापूर्वकत्वान्न वृद्धिः। श्रीमतीं श्रीमन्तं वा श्रययति। अशिश्रयत्। पयस्विनीं पयसयति। इह टिलोपो न। तदपवादस्य लुकः प्रवृत्तत्वात्। स्थूलं स्थवयति। दूरं दवयति। कथं तर्हि 'दूरयत्यवनते विवस्वति' इति। दूरमतिक्रामयते वा—दूरात्। दूरातं कुर्वतीत्यर्थः। युवानं यवयति—कनयति। 'युवाल्पयोः—' (२०१६) इति वा कन्। अन्तिकं नेदयति। बाढं साधयति। प्रशस्यं प्रशस्ययति। इह श्रो न। उपसर्गस्य पृथक्कृतेः। वृद्धं ज्यापयति। प्रियं प्रापयति। स्थिरं स्थापयति। स्फिरं स्फारयति। उरुं वरयति—वारयति। बहुलं बंहयति। गुरुं गरयति। वृद्धं वर्षयति। तृप्रं त्रपयति। दीर्घं द्राघयति। वृन्दारकं वृन्दयति।

इति तिङन्तनामधातु-प्रकरणम्।

---

* एतत् तत्त्वबोधिन्यां दृश्यते न तु बालमनोरमायाम्।

The words मुण्ड etc. take णिच् in the general sense of 'doing' attached after the special senses laid down in the following Varttikas. 'व्रतात्—' ( varttika )—णिच् is used after व्रत in the sense of eating and of refraining from the same. Thus पयः व्रतयति—takes the milk and शूद्रान्नं व्रतयति—refrains from taking the food prepared by a Sudra. 'वस्त्रात्—' ( varttika )—easy. संवस्त्रयति—covers with a cloth. 'हल्यादिभ्यः—'(varttika)—'हलिकल्योः—' (varttika)—णिच् is attached to हलि ( a big plough ) and कलि ( fight ) etc. in the sense of acceptance, and हलि and कलि are to be regarded as अकारान्त by निपातन. Although in अजहलत् ( हलि+णिच्+चङ्+तिप् ) etc. वृद्धि ( by 'अचो ञ्णिति' 7. 2. 115 ) due to its subsequence to टिलोप ( directed by णिच्—3. 1. 21. which has इष्टवत्त्व by 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्टवच्च ( गण— ) under चुरादि ) takes effect prior to the latter ( टिलोप ), yet by इष्टवद्भाव—अक् ( i. e. आ after वृद्धि of हल etc. ) indeed elides. Consequently, due to अग्लोपित्व there is no सन्वत्त्व, cp—'सन्वल्लघुनि—' ( 2316 ) and दीर्घ by 'दीर्घो लघोः' ( 2318 ). But, on the contrary, had there been no अदन्तनिपातन, there would have been, after the वृद्धि of हलि etc, the elision of 'ऐ' ( by इष्टवद्भाव ) which is not an अक्—consequently there would have been सन्वद्भाव and दीर्घ giving अजीहलत् etc, which are not sanctined by usage. कृतं गृह्णाति i. e. admits the benefit derived. इत्यत्रैव पठितुं युक्ताः— because both the rules direct the same thing namely णिच्. Though the words मुण्ड etc. could have णिच् after them by the गणसूत्र 'प्रातिपदिकाद्धात्वर्थे—' and though these could have been included

under the rule 'सत्यापपाश—' (2563) yet some of these have been separately enunciated here in order to attach णिच् even when the bases मुण्ड etc. are सापेक्ष or stand in relation with any other word. Thus माणवकं मुण्डं करोति—मुण्डयति माणवकम् ( shaves the head of the boy ) and अन्नं मिश्रं करोति—मिश्रयत्यन्नम् etc. श्लक्ष्णयति—cleans. लवणयति—adds salts to. But हलि and कलि have been enlisted here to make them अकारान्त, सत्य is mentioned is Sutra 2563 to add the aug. आपुक् after it and some others there by way of clear expression. सत्यापयति—( makes or speaks the truth )—no वृद्धि due to आपुक्। 'अर्थवेदयोः—' varttika. पाशम् etc. relieves ( himself ) of the bondage. Here काशिका reads the two varttikas—(1) 'पाशाद्विमोचने' and (2) 'रूपाद्दर्शने'। उपवीणयति—sings in accompaniment with a lyre ( for another's pleasures ). अनुतूलयति—moves (backward and forward) the point of a straw with a bit of cotton ( to draw it out ). उपश्लोकयति—utters ( or composes ) verses in praise of another. अभिषेणयति—makes an expedition against. 'त्वच संवरणे'—घः i. e. the word त्वच is derived with the affix घ directed by 'पुंसि संज्ञायां--' (3296). Then add णिच् after it. संवर्मयति—arms himself with an armour. अवध्वंसते—destroys with dusts. काशिका reads अवध्वंसयति। Here इष्टवत् being referred to (cp. 'प्रातिपदिकाद्धात्वर्थे—' ) we have पुंवद्भाव etc. ( cp.—"इष्टे च प्रातिपदिकस्य पुंवद्भाव-रभाव-टिलोप—विन्मतुव्लोप-प्रस्थ-स्फाद्यादेश-भसंज्ञास्तद्वणावपि स्युः"—चुरादि )। Thus एतयति—एनी is the feminine of एत ( a kind of colour cp.—वर्णादनुदात्तात्—' 496); दारदयति—दरद is the name of a person or king—दारदयत्वं पुनः

दारद: (with अण् whence by 'अतश्च' (1196) we have दरद् in feminine and by पुंवद्भाव दारद् again. Without पुंवद्भाव it would give दरयति which is not intended. पृथुम् i. e. पृथुम आचष्टे. Similarly—elsewhere. टिलोप i. e. the elision of टि which is the उकार here is effected after or before the वृद्धि in प्रथयति, रभाव of ऋ being provided for by 'र ऋतो हलादेर्लघोः' (1785) अपिप्रथत्—अपप्रथत्—the former is effected in the case of वृद्धि—where there being no अग्लोप 'सन्यतः' (2317) takes effect; no दीर्घ because the अभ्यास 'पि' is गुरु due to the संयोग 'प्र'; and the latter is effected when there is no वृद्धि where there being अग्लोप 'सन्यतः' fails. परिव्रढ़यति etc.—the base is परिवृढ़ whereof परि is set apart when any radical operation takes place, cp. 'उपसर्गसमानाकारम्—' etc. ऊढ़िमाख्यत्—here आख्यत् is the लुङ form of आचष्टे। औजिढत्—लुङ् form of ऊढि which is derived with क्तिन् (उह्+क्तिन्) by 'हो ढः' (324—8. 2. 31), 'झषस्तथोः—' (2282—8. 2. 40) 'ष्टुना ष्टुः' (110—8. 4. 41) and 'ढो ढे लोपः' (2335—8. 3. 13)—ढत्व—धत्व—ष्टुत्व—ढलोपाः। Now ऊढ़ि+णिच्=ऊढि by टिलोप—ऊढि+चङ् तिप्=आट् ऊह् इति अत्;—इति by 'अजादेर्द्वितीयस्य' is duplicated due to the invalidity of ढत्व, धत्व, ष्टुत्व and ढलोप. Here it cannot be argued that as द्वित्व has to be operated, so ढत्व etc. will not be considered as invalid due to the existance of the परि—'पूर्वत्रासिद्धीयमद्विर्वचने'। For this परिभाषा is अनित्य or provisional only and therefore does not apply here. Then comes इत्व of the अभ्यास by 'सन्यतः' (2317) and जुत्व by 'कुहोश्चुः' and also ढत्व etc. again along with ढलोप by 'ढ्रलोपे—' (2313)

इतुग्रहम्—cp. 'न न्द्राः— (2446). इत्यन्ये—i.e. कैयट and othe[illegible] औडिढत्—by ज् श्त्व and वृद्धि. औजढत्-औडढत्—here in both [illegible] cases the इकार of णिच्, is not heard because हृत or [illegible] duplicated before the operation of णिच् due to the prohibi[illegible] 'द्वित्वे कार्य्ये—' which has been expressed (by Dikshita) un[illegible] ऊण (1889—Root No.) परिहारो—under चुरादि on the occa[illegible] of the formation of औननत्। The word 'स्व' in णिच् will [illegible] undergo टिलोप but will retain its primitive character [illegible] 'प्रकृत्यैकाच्' (2010) due to its being एकाच् or monosylla[illegible] Thus it becomes 'स्वापि' by वृद्धि and पुक्। त्वापयति, मापयति (spe[illegible] of you and me)—Here by 'प्रत्ययोत्तरपदयोश्च' (1373) we h[illegible] त्व अद् णिच् and म अद् णिच्. Now टिलोप due by इष्टवद्भाव be[illegible] नित्य takes effect before पररूप due by 'अतो गुणे' (191—6. 1. 9[illegible] though the latter follows upon the former. Thus we get त्[illegible] मापि by वृद्धि and पुक् ('अचो—' 254 and 'अर्तिह्री—' 2570). [illegible] त्वादयति, मादयति are (more) grammatical by उपधावृद्धि as पत्व- is an अन्तरङ्गविधि which therefore taking effect there is no cha[illegible] of टिलोप due to the influence of प्रकृतिभाव by 'प्रकृत्यैकाच् (2010) Nor is it to be mistaken that प्रकृतिभाव has been refuted in t[illegible] भाष्य; for the भाष्य—defends in different way only the partic[illegible] instances as प्रेयान्, प्रेष्ट etc. (but does not thereby reje[illegible] प्रकृतिभाव—see भाष्य in मित—. It is important to note t[illegible] Nagesha is opposed to the above view of Bhattoji). युवामावां [illegible] similarly in the case of युष्मानस्मान् वा। श्वावयति—श्वन्+णिच्+[illegible] तिप्-अय् श्व् due to टिलोप by नस्तद्धिते (679) (Although [illegible]

is एकाच् and इष्टवद्भाव is present yet ) प्रकृतिभाव due by 'प्रकृत्यैकाच्' (2010) does not take effect—for by the maxim 'येन नाप्राप्तिस्तेन व्यवहितेऽपि वचनप्रामाण्यात्'—'an injunction proceeds on the authority of that (very) statement ( by which it is ordained. ) even if it is intervened by another rule or operation the application whereof is unavoidable ( नाप्राप्तिः )'—it ( प्रकृतिभाव ) bars the rule 'टेः' (2010) only which is invariably present after it and not the rule 'नस्तद्धिते' which is not so. श्वन् being भसंज्ञक, gets सम्प्रसारण by 'श्वयुवमघोनामतद्धिते' ( 362 ). Thus we have शु इ अति ( Note that व् gets सम्प्र. due to स्थानिवद्भाव or असिद्धत्व of टिलोप effected by 'नस्तद्धिते' ( 6. 4. 144 ) which falls under 'असिद्धवदत्राभात्' 6. 4. 22 ). Then by 'अचो ञ्णिति' and 'एचोऽय्—'—शावयति। But others hold that 'नस्तद्धिते' has not been ( intended to be ) transferred to the case of श्वन्+णिच् as it ( श्वन्+णिच् ) necessitates इष्टवद्भाव and ) as 'नस्तद्धिते' is not seen ( to apply ) in the case of इष्टन्, for in the cases of ब्रह्मिष्ठ (अतिशयेन ब्रह्मा or ब्रह्मवित्) etc. the rule 'टेः' only takes place. And therefore there is no टिलोप as 'टेः' is barred by 'प्रकृत्यैकाच्'। Thus by प्रकृतिभाव, सम्प्र. and गुण we have शुनयति according to them. विदयति—according to some who hold that सम्प्र. here does not take place due to the अङ्गवृत्त परिभाषा ( 'अङ्गवृत्ते पुनर्वृत्तावविधिः'—i.e. one अङ्गकार्य having taken effect another will not do ). Thus the वस् of विद्वस् eliding by टिलोप, the व् of विद्व will not have सम्प्र. by 'वसोः सम्प्रसारणम्' ( 435 )—while others say that विदावयति—is the result of विद्वस्+णिच by सम्प्र. (after टिलोप) which (सम्प्र.) comes in

by 'वसोः—' due to the असिद्धत्व of टिलोप ( 'टेः' 6. 4.155 ). वृद्धि etc. before ; others, however, hold that विद्यति is the ( grammatical ) form—for सम्प्रसारण being नित्य, takes effect before टिलोप ; being अन्तरङ्ग, पूर्वरूप steps in and finally टिलोप i.e. the elision of उस्. The former (विद्वयति), however, is regarded, says Nagesha, as correct. उदीचयति—उदच् (उद्—अञ्च्+क्विन्—नलोप by 'अनिदिताम्—' 415 )+णिच् etc=( उद् ) अच् इ, अति due to the segregation of उद् by 'उपसर्ग-समानाकारम्—'=( उत् ) ईचि अति by 'उद ईत्' ( 420 )= उदीचयति with उद् preffxed and गुण by 'सार्व—' ( 2168 )—Here there is no टिलोप due to 'प्रकृत्यैकाच्' ( 2010 ) which applies after the separation of उद्। उदैचिचत्—लुङ् separation of उद् etc. before ; duplication of चि due to the prohibition of णिलोप by 'द्विर्वचनेऽचि' ( 2243 ) ; वृद्धि and णिलोप in the उत्तरखण्ड। प्रतीचयति— प्रत्यच् ( प्रति-अञ्च+क्विन् )+णिच् etc.—अ of अच् elides by 'अचः ( 416 ) and इ of प्रति is lengthened by 'चौ' ( 417 ). Similarly समीचयति। तिराययति—तिर्यच्+णिच्। Here तिरस् of तिर्यच् is an अव्यय and not उपसर्ग ; so it is not segregated, consequently there is no प्रकृतिभाव for तिर्यच् is अनेकाच्. Now 'प्रकृत्यैकाच्' not applying we have टिलोप or the elision of अच् due by इष्टवद्भाव in connection with णिच. Again, although अञ्चि i. e. अच् disappears by टिलोप, yet this टिलोप or अच्लोप being असिद्ध or invalid due to the वहिरङ्गत्व ( of the affix णिच् which is the cause of टिलोप ), we have तिरि in the place of तिरस् ( by 'तिरसस्तिर्य्यलोपे' —423 ). And the first टिलोप ( effected by 'टेः' 6. 4. 163 ) being असिद्ध by 'असिद्धवत्—' ( 6. 4. 22 ) by the analogy of the सुक् or elision of व ...

after चिण् (in अपाचितरात् where the तशब्द eliding by 'चिणो लुक्,' (2329—6. 4. 104), the तशब्द of the तर does not again elide by the same, due to the interposition of the first तशब्द which is असिद्ध. Thus here there is no टिलोप i.e. the elision of इ of तिरि (by 'टे:'). Or—the टिलोप (2nd) may be forbidden by the सकृद्वृत्तपरिभाषा or 'अङ्गवृत्ते पुनर्वृत्ताविधि:' (see ante). Thus तिरि+णिच्=तिरायि by वृद्धि and आयादेश then गुण etc. in con. with शप् तिप्। And in चङ् there is no उपधाह्रस्व (due by 'चङ्युपधाया:—' 2316) on a account of—अग्लोपित्व of तिरि (though, strictly speaking, there is no अग्लोप here but the root अञ्च itself elides yet the elision of 'अ' along with it (अञ्च) is regarded as an emblem of अग्लोप)—अतितिरायत् by वृद्धि etc. as before. सध्र्यञ्चम्—the base is सध्र्यच (सह—अञ्च्+क्विन् by 'सहस्य सध्रि:' 422) cp—Amara also —

> 'देवानञ्चति देवद्र्यङ् विश्वद्र्यङ् विश्वगञ्चति (ष्व ?)।
> य: सहाञ्चति सध्र्यङ् स स तिर्यङ् यस्तिरोऽञ्चति ॥'
>
> अमरकोषविशेष्यनिघ्नं प्राणिवर्ग:।

सध्र्याययति—the base is सध्रि—process as in तिराययति। असध्र्यायत्—' duplication of सध्रि because सह is not an उपसर्ग; hence 'उपसर्गसमानाकारम्—' does not apply here. अविविष्वद्र्यायत्—duplication of विष्वद्रि formed by 'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये' (418) which directs अद्रि in the place of टि of विषक् (and देव). Similarly अदिदेवद्र्यायत्। आददद्र्यायत्—duplication of अदद्रि (अदस्+अद्रि+अञ्च्+क्विन्=अदद्र्यञ्च्=अदद्रि by टिलोप) आददमुआयत्—आमुमुआयत् duplication of मु and मु res-

pectively. Though 'सु' is असिद्ध or invalid, yet it gets [illegible] by 'पूर्वत्रासिद्धीयमद्विर्वचने' ( परि—) see also :—

'अदसोऽद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववत् ।
केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यते ॥

under 'अदसोऽसेर्दादुदो मः' ( 419—8. 2. 80 ). अवीभवत्—by '[illegible] पुयण्जि—' ( 2577 ). अनुभवत्—द्वित्व of भु—अभ्यासकार्य—[illegible] in the उत्तरखण्ड—णिलोप—उपधाह्रस्व। Similarly अशिश्रयत् here [illegible] both the cases 'ओः पुयण्—' does not apply. अजूगवत्—[illegible] base is गो which becomes गु by 'ह्रस्वः' ( 2180 ) and '[illegible] —' ( 323 ) and then दीर्घ ( गू ) by 'दीर्घो लघोः' ( 2318 ). Similarly अरीरयत् and अनूनवत्। स्वाशश्वत्—the base is स्वश्व (an excellent horse ) ; सु is set apart by 'उपसर्गसमानकारम्—' and is doubled by 'अजादेर्द्वितीयस्य'। अव्ययानाम् etc—hence the [illegible] (अर्) of स्वर् elides because there is no chance of '[illegible] काच्' ( 2010 ) which forbids 'टेः' ( 1786 ) only. असस्व[illegible] असिस्वत्—the former is by द्वित्व of स्वर् due to the saying '[illegible] आदेशो न द्वित्वे कार्ये' ( ante ) which prevents the टिलोप in c[illegible] with णिच whereas the latter is by द्वित्व of स्वि ( by [illegible] and application of णिच् ) according to those who hold [illegible] the टिलोप or the elision of अर् ( of स्वर् ) is not an [illegible] वहन् etc. i.e. वहन् आचष्टे—भावयति by 'वहोर्लोपो भू च वहोः' ([illegible]) but the aug. 'यिट्' directed by 'इष्ठस्य यिट् च' ( 2018 ) does not come in, for the term 'इष्ठवत्' ( प्रातिपदिकाद्धात्वर्थे [illegible] मिष्टवच्च' ) implies that the operations, due in इष्ठप्रत्यय, are [illegible] be transferred ( अतिदिश्यन्ते ) to णि and not 'that the op[illegible]

tions laid down for द्रढ are to be transferred to पि also. वहयति—this is according to others who hold that वहु will not be replaced by the भूभाव also. स्रजयति—by 'विन्मतोर्लुक्' (2020). वृद्धि ('अचो ञ्णिति' 254) due to its being enjoined by pronouncing the same (वृद्धि) and thus falling under the परिभाषा—'संज्ञापूर्वकविधेरनित्यत्वम्' (93) or when that which is enjoined is denoted by the technical terms such as गुण, वृद्धि etc in the rule—the rule is not valid everywhere. Similarly—श्रययति, अशिश्रयत् as before. पयसयति—elision of विन्. But (after this) the टि or अस् of पयस् does not elide by 'टेः' (1786) as 'विन्मतोः' supersedes 'टेः'। स्थवयति—by the elision of 'ल' and गुण of ऊ of the base स्थूल by 'स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं (लुप्यते) पूर्वस्य च गुणः' (2015). And after गुण there is no वृद्धि by the अङ्गवृत्तपरिभाषा or 'अङ्गवृत्ते पुनर्वृत्तावविधिः'. कथं तर्हि—here दूरयति is the locative of दूरयत् formed in con. with शतृ attached to the base दूरात् which again is formed by क्विप् in the sense of दूरमतति or अयते (i.e. गच्छति). नेदयति—साधयति by 'अन्तिकबाढयोर्नेदसाधौ' (2041). प्र—i.e. in प्रशस्यय there is no 'श्र' by 'प्रशस्यस्य श्रः' (2009), nor 'ज्य' by 'ज्य च' (2011) as प्र the उपसर्ग is segregated in the occasion of operation, cp.—प्राशशस्यत् etc. ज्यापयति—वर्षयति by 'वृद्धस्य च' (2013). प्रियम् etc by the rule 'प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रप्द्राघिवृन्दाः' (2016) and वृद्धि and पुक्।

Here ends the नामधातुप्रकरण or the chapter on nominal bases under 'तिङन्त'।

मित—। मुण्डेत्यादि। 'शब्दवैर—' (३।१।१७) इत्यतः 'करणे' इत्य-
वर्त्तते। तेनापेक्षितलाभं पूरयन्नाह—करोत्यर्थे इति। एतच्च क्रियासामान्यं वर्तते
—भोजनादिः। व्रतादिति—वार्त्तिकम्। तन्निवृत्त्योरिति—(भोजने च) भोज-
निवृत्तौ चेत्यर्थः। शूद्रान्नं व्रतयतीति—वर्ज्जयतीत्यर्थः। वस्त्रादिति—वार्त्तिक-
संवस्त्रयतीति। वस्त्रेण समाच्छादयतीत्यर्थः। हलादिभ्य इति, हलिकल्योरि-
च वार्त्तिकद्वयम्। महद्धलमिति। कलिस्तु युद्धार्थकं तथा चामरः—'समप्रहा-
भिसम्पात कलिसंस्फोटसंयुगाः'। परत्वाद्वृद्धाविति—'मुण्डमिश्र—' (३।१।२१)
इति हि णिज् विधीयते। तस्य च 'प्रातिपदिकात्—' इतीष्टवद्भावः। स च टे-
कलयोर्हलकलयोर्वा टिलोपे हेतुः। तदपेक्षया 'अचो ञ्णिति' (२५४—७।२।११५)
इति वृद्धिस्तु परा। अतष्टिलोपात् प्राक् वृद्धया हलकलयोः (अदन्तयोः)
आकारान्तत्वं भवति। स चाकारोऽग् भवति लुप्यते च स एव णाविष्ठ-
भावेन। ततश्च अग्लोपित्वात् 'सन्वल्लघुनि—' (२३१६) इति न प्रवर्त्तते।
च 'सन्यतः (२३१७) इति। नापि 'दीर्घो—' (२३१८) इति। अत आ-
अतः सन्वदित्यादि। हलकलयोरनदन्तत्वे तु हलिः कलिरित्यनयोः "अचो ञ्णि-
इति वृद्धया ऐदन्तत्वे तस्य (ऐकारस्य) च णाविष्टवद्भावेन लोपे अग्लोपित्वा-
भावात् 'सन्वल्लघुनि—' इत्यस्य प्रवृत्त्या सन्वद्भावादिभिः अजीहलत् अचीकल-
दित्यनिष्टं स्यादित्यवगन्तव्यम्। कृतं गृह्णातीति—'उपकारं स्वीकरोतीत्यर्थ' इ-
तत्त्वबोधिनी। पठितुं युक्ता इति—एकसूत्रीकरणे लाघवादिति भावः। ननु द-
न कर्त्तव्यं 'प्रातिपदिकात्—' इति गणसूत्रेणैवेष्टसिद्धेरित्याशङ्क्य आह—केषाञ्चि-
ग्रहणमिति—मुण्डमिश्रादीनामित्यर्थः। सापेक्षेभ्योऽपीति—विशेषणविशिष्टत्वेन स-
र्थेभ्योऽपीत्यर्थः। सापेक्षत्वमेव उदाहृत्य दर्शयति—माणवकमित्यादिना। अयं भा-
—'समर्थः पदविधिः' इति न्यायेन यथा महान्तं पुत्रमिच्छतीत्यादौ पुत्रीयतीत्या-
वृत्तिर्न भवन्ति किन्तु वाक्यमेव तथा णिजन्तस्यापि सनाद्यन्तवृत्तित्वात् माणवकं मु-
करोतीत्यादीनां सविशेषणानां वृत्तिर्नास्त्येव। यदा तु प्रकरणादिना माणवक-
माणवकं करोति मुण्डयतीति 'प्रातिपदिकात्—' इत्यनेन ...

तदेवं मुण्डयति माणवकमित्यादौ 'प्रातिपदिकात्—' इत्यस्याप्राप्तः 'मुण्डमिश्र—' इत्यारब्धत इति। श्लक्ष्णयतीति—परिष्करोतीत्यर्थः। लवणयतीति—लवणयुक्तं करोतीत्यर्थः। अदन्तत्वार्थमिति—न तु सापेक्षाभ्यामपि णिजर्थमिति भेदः। तत् करोतीत्येव सिद्धे 'सत्यापपाश—' इत्यत्र सत्यग्रहणं व्यर्थमित्याशङ्क्य आह—सत्स्येति। वैपाश्विति—पाशादीनामित्यर्थः। अर्थ वेदयोरिति—वार्त्तिकम्। पाशं विमुञ्चतीति। 'पाशाद् विमोचने' इति 'रूपाद्दर्शने' इति च काशिकायाम्। सत्यापयतीत्यत्र आपुक्सामर्थ्यान्न टिलोपः। 'त्वच संवरणे घ' इति—अत्र पुंसि संज्ञायाम्—' इति घप्रत्यय इति भावः। 'त्वच' इति घप्रत्ययान्तोऽकारान्तश्च। अवध्वंसत इति। अवध्वंसयतीति तु काशिकायाम्। इष्टवदित्यतिदेशादिति—प्रातिपदिकाद्धात्वर्थे बहुलमिष्टवच्चे'त्यनेनेत्यर्थः। पुंवद्भावादय इति—आदिशब्देन रभावटिलोप—भसंज्ञादयो ग्राह्याः। एतच्च णिच्प्रकरणे (चुरादौ) उक्तमिति तत्रैव द्रष्टव्यम्। एतयतीति—एत इति वर्णवाचि प्रातिपदिकम्। तस्य 'वर्णादनुदात्तात्तोपधात्तो नः' (४९६) इति ङीपि नकारादेशे च एनी इति भवति तस्य णाविष्टवद्भावेन ङीब्नकारयोर्निवृत्तिः। एतच्च णाविष्टवद्भावाद् टिलोपेन ङीब्निवृत्त्या तत्सन्नियोगशिष्टस्य नकारस्यापि 'संन्नियोगशिष्टानामन्यतरापाये उभयोरप्यपायः' इति न्यायेन निवृत्तिरिति पुंवद्भावाभावेऽपि एतयतीति सिध्यतीति भावः। पुंवद्भावस्योदाहरणान्तरमाह—दारदयतीति। दरदिति कश्चिद्राजेति तस्यापत्यं पुमान् दारदः। 'द्व्यञ् मगधकलिङ्गसूरमसादण्' (११८८) इत्यण्। तस्य स्त्रियाम्—'अतश्च' (११९९) इत्यणो लुकि दरद् इति। तामाचष्टे इति दरद्+णिच्+शप् तिप् इति स्थिते णाविष्टवद्भावात् पुंवत्वेन अणोलुकि दारद इति। तस्य टिलोपादिना दारदयतीति। पुंवद्भावाभावे तु टिलोपेन दरयतीति स्यादिति भेदः। पूर्वमेव तु न्याय्यम्। वृद्धौ सत्यामिति—'अचो ञ्णिति' (१९५) इत्यस्य परत्वाद्, वृद्धौ कृतायां टिलोपेन औकारलोपेऽकृतायान्तु वृद्धौ टिलोपेन उकारलोपे प्रथयतीति भवत्येव। 'र ऋतो—' इति रभावः। एवं ...पक्षे अगलोपाभावेन ... इतीदम् अपिप्रथदिति। इकारस्य

संयोगपरतया लघुत्वाभावेन 'दीर्घो लघो'रिति दीर्घो न। वृद्ध्यभावपक्षे तु ञ्ञ लापेनाग्लोपित्वात् सन्वत्त्वाभावेन इत्त्वाभावः। पूर्ववदलघुत्वाद् दीर्घाभावः पूर्वत्र दीर्घो लघोरिति दीर्घ इति कश्चित्। तत् प्रामादिकमेवेत्युपेक्ष्यम्। अमिमृदत्—अमसददिति। परिव्रढयतीति—स्वाम्यर्थकः परिवृढ इति पदिकम्। अत्र लुङादौ 'उपसर्गसमानाकारं पूर्वपदम्'—इति प्रयोज्यमिति ऊढिमाख्यदिति। ऊढिरिति ऊह्धातोः क्तिन्प्रत्यये परे 'होढः', 'झषस्त 'ष्टुना ष्टुः,' 'ढो ढेलोपः' इति ढत्वधत्वष्टुत्वढलोपेषु कृतेषु रूपम्। पूर्वत्रासिद्धीयत्वेन असिद्धत्वाद् ऊहयतीति शपि। चङि तु औजिढदिति प्रक्रियामाह—ढत्वादीनामिति। हृति शब्दस्येति—ढत्वादिनिवृत्त्या तत्रैव स्थितिः। नन्वत्र द्विर्वचनस्य कर्त्तव्यतया 'पूर्वत्रासिद्धीयम्—' इति ढत्वादीनामसिद्धत्वं न स्यादित्याशङ्क्य आह— इति त्वनित्यमिति। न प्रवर्त्तते इति भावः। एतच्च 'न न्द्राः—' (२४४६) इत्यत्रोक्तम्। हृतिशब्दस्यैव द्वित्वेऽभ्यासकार्य्यं चुत्वेत्त्वे। उत्तरखण्डे ढत्वादि। तेषाञ्चासिद्धत्वा दीर्घो न। एवं मतान्तरीये उडिढदित्यत्र। ननु औजठत्—औडडदित्यत्र निमित्त इकार श्रूयेतेत्याशङ्क्य आह—'ओः पुयण्—' इति। अत्र तत् पूर्वोक्तमित्यलम्। पूर्वत्र हृतेत्यस्य द्वित्वम्। उत्तरत्र ढशब्दस्येति विवेकः। इति। स्वशब्दस्यैकाच्त्वेन 'प्रकृत्यैकाच्' (१०२०) इति प्रकृतिभावे टिलोपा वृद्धिः। ततः 'अर्तिह्री—' (२५७७) इति पुक्। त्वापयतीत्यादि। 'प्र त्तरपदयोश्च' (१३७२) इति मपर्य्यन्तयोः त्वमौ। तदेवं त्व अद् णिच् इत्यादौ 'अतो गुणे' (१९१—६।१।९७) इति पररूपे टिलोपात् प्रागुपस्थिते नित्यत्वाट्टिलोप इति। त्वादयतीत्यादि। स्पष्टं मूले। अन्तरङ्गत्वादिति। 'वार्णादाङ्गं बलीयः' इति न्यायेन टिलोपस्यैव प्राक् प्रवृत्तिरुचितेति वाच्यम्। नित्यत्वादिति भावः। नागेशस्तु 'अनित्यत्वाश्रयणे—दृढतरमानाभावात् इयाय इत्यादौ तत्प्रवृत्तेश्च आद्यमेव (त्वापयतीत्यादि) न्याय्यमि'त्याह। मादि

सामर्थ्यादेकाजुच्चारणसामर्थ्याच्च 'प्रकृत्यैकाच्' इति विहितं प्रकृतिभावं विनैव साधिताः। न त्वेतेन प्रकृतिभावः प्रत्याख्यातः इति शक्यं निगमयितुं स्वापयतीत्यादौ प्रकृतिभावस्यावश्यकत्वात्। 'अन्तरेणापि वचनं प्रकृतिभावो भविष्यती'त्यपिशब्दप्रयोगाच्च। अन्यथा अन्तरेणैवेत्येवशब्दमेव प्रयुञ्जीतेति भावः। नागेशस्तु 'प्रत्याख्याने एव भाष्यतात्पर्य्यमित्याहु'रित्याह। इदमत्र भाष्यम् (प्रकृत्यैकाच् (६।४।१६३) सूत्रस्थम्):—"इष्ठेमेयःसु प्रकृतिभावे किमुदाहरणम्। प्रेयान्। प्रेष्ठः। नैतदस्ति। प्रादीनामसिद्धत्वात् ('असिद्धवत्—' इत्याभीयत्वेनेति भावः) न भविष्यति। इदं तर्हि। श्रेयान्। श्रेष्ठः। 'प्रकृत्यैकाजिष्ठेमेयःसु' 'चेदेकाच उच्चारणसामर्थ्यादवचनात् प्रकृतिभावः' (वार्तिक)। प्रकृत्यैकाजिष्ठेमेयःसु चेत्तन्न। किं कारणम्। एकाच उच्चारणसामर्थ्यात्। अन्तरेणापि वचनं प्रकृतिभावो भविष्यति। विन्मतोर्लुगर्थं प्रकृतिभावो वक्तव्यः। स्रग्वितरः। स्रजीयानित्यादीत्यलम्"। युवामावां वेति। 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते। इति न्यायेन 'युवावौ' इत्यादेशौ न। लुका लुप्तत्वात्। युष्मान् अस्मान् वेति विग्रहेऽपि रूपं तुल्यम्। शावयतीति। श्वन् णिच् शप् तिप् इति स्थिते 'नस्तद्धिते' (६७९) इति टिलोपात् श्व इ अति इति स्थिते 'णाविष्टवत् प्रातिपदिकस्य' इतीष्ठवत्त्वेन भसंज्ञकत्वात् 'श्वयुवमघोनामतद्धिते' (३६२) इति सम्प्रसारणे कृते वृद्ध्यावादेशयोश्कृतयोर्यथोक्तं रूपम्। ननु श्वन्नित्यस्य एकाच्त्वात् 'प्रकृत्यैकाच्' (२०१०) इति प्रकृतिभावः स्यादित्याशङ्क्य आह—प्रकृतिभावस्तु नेति। इत्यस्यैव बाधक इति। न तु 'नस्तद्धिते' इत्यस्यापीत्येवकारार्थः। येन नाप्राप्तिन्यायेनेति—'येन नाप्राप्तिस्तेन व्यवहितेऽपि वचनप्रामाण्यात्' इति प्रकृतिभावस्तु नेति पूर्णं वचनम्। येन विधिना न अप्राप्तिः किन्तु प्राप्तिरेव अपरिहार्यप्राप्तिरित्यर्थः। अयमत्र सूत्रक्रमः—'नस्तद्धिते' (६।४।१४४), 'टेः' (६।४।१५५), 'प्रकृत्यैकाच्' (६।४।१६३) इति। टेरितिचात्र, अपरिहार्य्यप्राप्तिस्तस्मात्तेन व्यवहितेऽपि प्रकृत्यैकाजिति तस्यैव बाधकम्। अयमत्र स्पष्टार्थः—यत्र यत्र 'प्रकृत्यैकाच्' इत्यस्य प्रवृत्तिस्तत्र तत्र 'टे'रित्यस्य प्रवृत्तिर्नतु 'नस्तद्धिते' इत्यस्यापि। स्रजिष्ठ—इत्यादौ तस्याप्रवृत्तेरिति भावः। ततश्चायं (प्रकृतिभावः) 'नस्तद्धिते' इत्यस्य न बाधकः। तस्य

प्रवृत्त्यभावात्। प्राप्तस्यैव हि प्रतिषेधो युज्यते न त्वप्राप्तस्येति। मतान्तरे तु ... वेत्याह—अन्ये त्विति। अन्ये इत्यस्य आहुरित्यनेनान्वयः। इष्ठनीति। यथा ... वह्निष्ठेत्यादौ। शुनयतीति—अनेन टिलोपाभावात् सम्प्रसारणगुणायादेशेषु ... एवं स्थिते पूर्वमेव न्याय्यं रूपं न तु परमिति बोध्यम्। न च टिलोपे सत्यन्नन्तत्वाभावात् 'श्वयुव—' इत्यस्याप्रवृत्तेः कथमिह सम्प्रसारणमिति वाच्यम्? स्थानिवद्भावेन ... टिलोपेऽन्नन्तत्वस्य लाभादित्यन्यत्र विस्तरः। विदयतीति। विद्वस्शब्दात् ... ततो णिचि गुणे प्रागवत्। इदमेव रूपं न्याय्यं न त्वितरं इति नागेशः। ... सम्प्रसारणम्' (४३५) इति सम्प्रसारणन्तु नेत्याह—अङ्गवृत्तेति='... पुनर्वृत्तावविधिः' इति परिभाषा। 'अङ्गे अङ्गाधिकारे वृत्तं निष्पन्नं यत् कार्यं तस्मिन् सति पुनरन्यस्य अङ्गकार्यस्य वृत्तौ प्रवृत्तौ अविधिरविधानं भवतीत्यर्थः' इति नागेशः। अतएवात्र टिलोपरूपाङ्गकार्ये कृते पुनः सम्प्रसारणरूपं कार्यान्तरं न। नित्यत्वादि ... 'शब्दान्तरस्य प्राप्नुवन् विधिरनित्य' इति न्यायादित्यर्थः। टिलोप इति—एवं ... 'विदुस्' शब्दस्य उसो लोप इत्यर्थः। अन्यत् समानम्। उदीचयतीति—उदपूर्वात् ... क्विन्प्रत्यये 'अनिदिताम्—' (४१५) इति नलोपे 'उदच्' इति प्रातिपदिकम् ... उपसर्गसमानाकारम्—' इत्युदः पृथक्कृत्वा 'अचः' एकाच्त्वेन प्रकृतिभावात् ... टिलोपः। 'अचः' (४१६) इति बाधित्वा 'उद ईत्' (४२०) इतीत्त्वम्। ... प्रागवत्। उदचिचत्—लुङि 'द्विर्वचनेऽचि' (२२४३) इति णिलोपस्य ... चिशब्दस्य द्वित्वम्। उत्तरखण्डे तु णिलोपः। अन्यत् प्रागवत्। प्रतीचयति ... 'अचः' (४१६) इत्यल्लोपे 'चौ' इति (४१७) दीर्घः। प्रत्यचिचत्—प्रति ... दिति। सर्वं स्पष्टं मूले। पूर्वन्तु, 'अचः' (४१६) इत्यकारलोपादुत्त ... प्रागट्। द्वित्वादि। न चात्र आसन्नित्यादाविव अलोपस्यासिद्धत्वाद् अडागमः न ... वाच्यम्। णाश्रयत्वात्। तथाहि णिनिमित्तोऽल्लोपः अडागमस्तु लुङ्निमित्तः ... आसन्नित्यादौ तु न तथेति भेदः। समीचयति—अत्र 'सम्' इत्युपसर्गः। तस्य ... समि' (४२१) इति सम्यादेशः। स च प्रागवत् पृथक् क्रियते। तिरायति ... तिरसस्तिर्यलोपे (४२०) इति तिर्यादेशे तिरस् ...

भावात् पृथक्कृतेरप्याभावः । ह्वद्र्यायादेशौ । ननु अञ्चतौ सत्यामेव तिरसस्तिर्यादेशः ।
न तु तदभावेऽपि । अत्र च एकाच्त्वाभावेन प्रकृतिभावात् इष्टवद्भावेन टिलोपात्
'अच्' इत्यस्य अपहारे (लोपे) सति 'तिरस स्तिरि' इत्यादेशो न स्यात् इत्यत आह—
वहिरङ्गत्वेनासिद्धत्वादिति—टिलोपस्येति शेषः । सहि णिनिमित्तः । णिश्च प्रत्यय-
त्वादतोवहिरङ्गम् । ततश्च 'असिद्धं वहिरङ्गमन्तरङ्गे' इत्यसिद्धम् । 'तिरि' इत्यस्य तु
मूलनिमित्तकत्वेनान्तरङ्गत्वामिति वोध्यम् । ननु तिर्यच्+णिच् इति स्थिते टिलोप-
तिर्यादेशयोः कृतयोः 'तिरि णि' इति जाते पुनष्टिलोपः स्यादित्याशङ्क्य आह—चिणो
लुङ्न्यायेनेत्यादि । यथा—'अपाचितराम्' इत्यत्र 'चिणो लुक्' (२३२९) इति चिणः
परस्य तशब्दस्यैव लुग् भवति न तु तरप्रत्ययस्यापि, प्रथमलुकोऽसिद्धत्वेन (६।४।१०४)
व्यवधानादप्रवृत्तेस्तद्वदितिभावः । अङ्गवृत्तेति—एतदुक्तम् । चङि अग्लोपित्वादिति—
यद्यपत्र विशिष्याग्लोपित्वं नास्ति तथापि अञ्चतिसहितस्याकारस्य लोपमादायैव तदुक्तम् ।
उपधाह्रस्वो नेति—'नाग्लोपिशास्वृदिताम्' (२५७२) इत्यनेन । अतितिरायदिति ।
तिरिशब्दस्य द्वित्वम्, सध्रायति—'सहस्य सध्रिः' (४२२) इति सध्र्यादेशः, अन्यत्
प्राग्वत् । असस्ध्रायत्—सहशब्दस्य अव्ययत्वेन पृथक्करणाभावात् सध्रिशब्दस्य द्वित्वम् ।
षविविष्वद्रायदिति । 'विष्वग्देवयोश्च—' (४१८) इत्यद्र्यादेशे प्राग्वत् । णिचि
(यपि) तु विष्वद्राययतीति ॥ आददद्रायदित्यादि—एतत् सर्वं सुप्प्रकरणे—'अदसोऽ
सेर्दादुदो मः' (४१९) इत्यत्र वृत्तिग्रन्थव्याख्यानावसरे 'अन्त्यवाधेऽन्त्यसदेशस्य' इति
एतस्य-परिभाषाव्याख्यानावसरे च प्रपञ्चितमस्माभिरिति विरम्यते । आसुसु आयदिति ।
'पूर्वत्रासिद्धीयमद्वित्वे' इति सुशब्दस्य द्वित्वम् ॥ अवीभवदिति । 'ओः पुयण्जि—'
(२५७७) इत्यनेन इत्वे 'दीर्घो—' (२३१८) इति दीर्घः । अवुसवदिति । अत्र
[illegible]व्यवधानेन अवर्णपरकत्वाभावाद् 'ओः पुयण्—' इत्यस्याप्रवृत्तेरुत्तरखण्डे णिनिमित्तो
[illegible]। एवमश्विश्वयदिति । अजूगवदित्यादि—गवादिरत्र प्रातिपदिकम् । 'ह्रस्वः'
(२१८०) इति ह्रस्वः । 'एच इग्घ्रस्वादेशे' इतीक् । तस्य 'दीर्घः—' इतिदीर्घः ।
[illegible]श्वदिति । शोभनःअश्वः स्वश्वः । उपसर्गसमानाकारत्वेन सुशब्दस्य पृथक्कृतेः
[illegible] '[illegible]द्वितीयस्य' इति अशब्दस्यैव द्वित्वम् । अडागमः । अव्ययानामिति—

भाष्यवचनमेतत्। सूत्रवार्तिकयोरनुपलम्भात्। स्वयतीति—स्वर् आचष्टे इति णौ टिलोपे णिचि गुणेन रूपम्। प्रकृतिभावस्तु न। तस्य 'टे'रित्यस्यैव बाधकत्वात् 'अव्ययानाम्—' इत्यस्यापि इतिभावः। असास्वत्—असिस्वरदिति। 'ओः पुयण्—' (२५७७) इति ज्ञापकात् णिचि अजादेशाभावेन स्वर्शब्दस्य द्वित्वे पूर्वम्। 'स्व लोपिन्यग्लोपित्वाभ्युपगमेऽप्यलादेशेऽजादेशत्वव्यवहारो नास्तीतिमतेन णिचा सह स्विशब्दस्य द्वित्वेन' परम्। वह्नन भावयति इति—वह्नन् आचष्टे=भावयतीति 'वह्नोर्लोपो भू च वह्नोः' (२०१७) इति भूभावः। 'इष्ठस्य यिट च' (२०१८) इति यिट् तु न। 'णाविष्टवत्—' इत्यत्र 'इष्ठवत्' इत्यस्य सप्तम्यन्ताद् वतिरिति व्याख्यानात् इष्ठनि परे यत् कार्यं तदेव णौ परे अतिदिश्यते स लिङ्गत्वेति पृष्ठलब्धेरनुगमात्। परे तु, न केवलं भूभावोऽत्र न भविष्यतीति न किन्तु यिडागमोऽपि नेत्याहुः। तेषामयं भावः—'यिडभावे तत्सन्नियोगशिष्टस्य (तत्साहचर्येणोपदिष्टस्य इत्यर्थः) भूभावस्याप्यभाव इति। अतएव टिलोपेन वह्नयतीति रूपम्। भावयतीति तु न्याय्यम्। स्रजयतीति—स्रष्टम्। 'अजादी गुणवचनादेव' (२००६) इत्युक्तेः विन्मतोरपि अजादी (इष्ठन्नीयसुनौ) भवत इत्याकरे स्पष्टम्। संज्ञापूर्वकत्वादिति 'संज्ञापूर्वकस्य विधेरनित्यत्वम्' इति परिभाषयेति यावत्। संज्ञा चात्र वृद्धिः। अत 'अचो ञ्णिति' (२५४) इति नेति भावः। आययतीति। मतुपोलुक्। अशिश्रियदिति। श्रिशब्दस्य द्वित्वमन्यत् प्राग्वत्। टिलोपो नेति। पयस इति शेषः। तदपवादत्वात् 'विन्मतोर्लुक्' (२०२०) इत्यस्येत्यर्थः। 'सत्यपिसम्भवे बाधनम्' इति न्यायमाश्रित्य लुङि—अपपयसत्। अत्राग्लोपे सत्यसति वा न सन्वत्त्वादीति 'नौचङि—' इत्यत्र भाष्यं मानम्। स्थवयतीति। 'स्थूलदूर—' (२०१०) इति यणादिपरलोपो गुणश्च। लुङि—अतुस्थवत्। दूरादिति। क्विप्। तस्मात्विजन्तात् शत्रु। ततः सप्तमी। लुङि अदुदवत्। अन्तिकमिति—'अन्तिकबाढयोर्नेदसाधौ' (२०१४)। असिसाधत्। अज्यावितिं। 'प्रशस्यस्य श्रः' (२००९), 'ज्यच' (२०११)। इत्युक्तेरिति—सोपसर्गस्यैव श्रज्यविधानमिति भावः। प्राशस्त्यात्। ज्यापयतीति। आकारान्तत्वात् णिचि 'दीर्घे अत्तिह्री—' (२५७७) इति पुक्। लुङि अजिज्यपत्।

प्रापयतीत्यादि। 'प्रियस्थिर—'इत्यनेन प्राद्यादेशे वृद्धिपुकौ। लुङि—अपिप्रयत्। अतिस्थपदित्यादि। वरयति—वारयति इति। 'वरादेशे कृते संज्ञापूर्वको विधेरनित्यत्वाद्वाहुलकाद्वा विकल्पेनोपधावृद्धि'रिति माधव इति तन्मते नेदम्। अवीवरत्। बंहयतीति। लुङि अग्लोपित्वाद् अबबंहत्। एवमुत्तरत्र लुङि क्रमेण—अजीगरत्। अविवपत्। अदद्राघत्। अववृन्दत् इति।

इति मितभाषिण्यां तिङन्त-नामधातु-प्रकरणम्।

अथ

# तिङन्त-कण्ड्वादि-प्रकरणम्

२६७८। कण्ड्वादिभ्यो यक् ॥३।१।२७॥

टी—। एभ्यो धातुभ्यो नित्यं यक् स्यात् स्वार्थे। 'धातुभ्यः' किम्? प्रातिपदिकेभ्यो मा भूत्। द्विधा हि कण्ड्वादयः- धातवः प्रातिपदिकानि च। 'कण्डूञ् १९४५ गात्रविघर्षणे'। कण्डूयति—कण्डूयते। 'मन्तु १९४६ अपराधे'। रोषे इत्येके। मन्तूयति। चन्द्रस्तु ञितमाह। मन्तूयते। 'वल्गु १९४७ पूजामाधुर्य्ययोः'। वल्गूयति। 'असु १९४८ उपतापे'। 'असू असूञ्' इत्येके। अस्यति। असूयति—असूयते। 'लेट् १९४९ लोट् १९५० धौर्त्ये पूर्वभावे स्वप्ने च'। दीप्तावित्येके। लेट्यति। लेटिता। लोट्यति। लोटिता। 'लेला १९५१ दीप्तौ'। इरस् १९५२, इरज् १९५३, इरञ् १९५४ ईर्ष्यायाम्। इरस्यति। इरज्यति। 'हलि च' (३५४) इति दीर्घः। ईर्यति—ईर्यते। उषस् १९५५ प्रभातीभावे'। 'वेद १९५६ धौर्त्ये, स्वप्ने च'। 'मेधा १९५७ आशुग्रहणे'। मेधायति। 'कुषुभ १९५८ क्षेपे'। कुषुभ्यति। 'मगध १९५९ परिवेष्टने'। 'नीचदास्ये' इत्यन्ये।

तसस् १९६०, पम्पस् १९६१ दुःखे। सुख १९६२, दुःख १९६३ तत्क्रियायाम्। सुख्यति। दुःख्यति। सुखं दुखं चानुभवतीत्यर्थः। 'सपर १९६४ पूजायाम्'। 'अरर १९६५ आराकर्मणि'। 'भिषज् १९६६ चिकित्सायाम्'। 'भिष्णज् १९६७ उपसेवायाम्'। 'इषुध १९६८ शरधारणे'। चरण १९६९, वरण १९७६, वरण १९७० गतौ'। 'चुरण १९७१ चौर्ये'। तुरण १९७२ त्वरायाम्'। 'भुरण १९७३ धारणपोषणयोः'। 'गद्गद १९७४ वाक्स्खलने'। 'एला १९७६, केला—१९७६ खेला १९७७ विलासे'। इलेत्यन्ये। 'लेखा १०७८ स्खलने च'। अदन्तोऽयमित्यन्ये। लेख्यति। लिट १९७९ अल्प-कुत्सनयोः'। लिटयति। 'लाट १९८० जीवने'। 'हृणीङ् १९८१ रोषणे लज्जायां च'। 'महीङ् १९८२ पूजायाम्'। महीयते। पूजां लभत इत्यर्थः। 'रेखा १९८३ श्लाघा-सादनयोः'। 'द्रवस् १९८४ परिताप परिचरणयोः'। तिरस् १९८५ अन्तर्धौ'। 'अगद १९८७ नीरोगत्वे'। 'उरस् १९८७ बलार्थः'। उरस्यति। बलवान् भवतीत्यर्थः। 'तरण १९८८ गतौ'। 'पयस् १९८९ प्रसृतौ'। 'सम्भूयस् १९९० प्रभूतभावे'। 'अम्बर १९९१ सम्बर १९९२ संभरणे'। आकृतिगणोऽयम्।

इति तिङन्तकाण्डवादि-प्रकरणम्।

Eng.—very—easy. See मितभाषिणी also.

मित—। अथैवं दशगणीसाधितधातूनां सामान्येन विशिष्टेन प्रक्रियां

प्रदर्शयन्नाह—कण्ड्वादिभ्य इति। धातुभ्य इति। 'धातोरेकाचः—' (३।१।२२) इत्यतस्तदनुवृत्तेरिति भावः। स्वार्थे इति—एवञ्च कर्त्तरि वेत्यपि योज्यम्। द्विधा ... एतद्भाष्ये स्पष्टम्। पूर्वभाव इति—पूर्वत्वमित्यर्थः। लेटितेति। 'यस्य ह' (२।४।३१) इति यलोपः। सुख्यतीति। चुरादौ तु अस्मिन्नेवार्थे सुखयतीत्यादि... सपर पूजायाम् इति। 'पूजा नमस्यापचितिः सपर्य्यार्चार्हणाः समाः' इत्यम... 'वत्सोत्सुकापि स्तिमिता सपर्य्यां प्रत्यग्रहीत् सेति ननन्दतुस्तौ' (रघु—२४) इ... कालिदासश्च। अरा आराकर्म्मणि इति। 'अररः प्रतोदः। तत्करणं ... आराकर्म' इति तत्त्वबोधिनी। इषुधशरधारणे इति। अतएवामरः—'तूणोपा... तूणीरनिषङ्गा इषुधिर्द्वयोः' इति। महीङ्पूजायामिति। 'सरस्वती श्रुतिम... महीयताम्' इति शकुन्तलान्तिमश्लोकः। प्रस्तुताविति। प्रस्तुतिः परिमाणविशे... आकृतिगणोऽयमिति। तेन 'टुवस् सन्दीपने' इत्यादीनामनुक्तानामपि संग्र... 'समिधाग्निं टुवस्यते' इति।

इति मितभाषिण्यां-तिङन्तकण्ड्वादि-प्रकरणम्।

अथ

# तिङन्तप्रत्ययमाला-प्रकरणम्

दो—। कण्डूयतेः सन्। 'सन्यङोः' (२३९५) इति प्रथमस्यैकाचो द्वित्वे प्राप्ते 'कण्ड्वादेस्तृतीयस्येति वाच्यम्' (वार्तिक)। कण्डूयियिषति। क्यजन्तात् सन्। 'यथेष्ट' नामधातुषु' (वार्तिक)। आद्यानां त्रयाणामन्यतमस्य द्वित्वमित्यर्थः। अजादेस्त्वाद्येतरस्य। पुपुत्रीयिषति—पुतित्रीयिषति—पुत्रीयियिषति। अशिश्वीयिषति—अश्वीयियिषति। नदराणां संयुक्तानामचः परस्यैव द्वित्वनिषेधः। इन्द्रीयतेः सन्। द्रीशब्दयिशब्दयोरन्यतरस्य द्वित्वम्। इन्दिन्द्रीयिषति—इन्द्रीयियिषति। चिचन्द्रयिषति—चन्दिद्रीयिषति—चन्द्रीयियिषति। प्रियमाख्यातुमाचष्टाणं प्रेरयितुं वेच्छति। पिप्रापयिषति—प्रापिपयिषति—प्रापयियिषति। उरुं विवारयिषति—वारिरयिषति—वारयियिषति। वाढं सिसाधयिषतीत्यादिरूपत्रयम् षत्वं तु नास्ति। आदेशो यः सकार इत्युक्तेः। 'यङ्सनण्यन्तात् सन्'। बोभूयिषयिषति। यङ्णिच्सन्नन्तास्णिच्। बोभूययिषयतीत्यादि।

इति तिङन्तप्रत्ययमाला-प्रकरणम्।

कण्ड्वादेः etc.—वार्त्तिक—'The third syllable (only) of the कण्ड्वादि-class roots gets duplication'— ; note that the कण्ड्वादि class get the third syllable in con. with यक् only by 'कण्ड्वादिभ्यो यक्'। यथेष्टम् etc—another वार्त्तिक—i.e. any one of the three syllables of a नामधातु gets द्वित्व, provided the root is हलादि whereas the 2nd and 3rd only of the same get द्वित्व when the root is अजादि। नदराणाम् etc—i.e. by 'नन्द्राः—' (2446). पिप्रापयिषति etc by 'प्रियस्थिर—' (2016) due to इष्ठवद्भाव in णिच्। षत्वं तु नास्ति i e. the स of सन does not become ष् though it comes after इण्—as it (स्) does not constitute an आदेश। यङ्सन् etc—This will explain the term प्रत्ययमाला or a garland (number of affixes). भू+यङ्=बोभूय; बोभूय+सन् =बोभूयिष no द्वित्व again due to 'लिटिधातोरनभ्यासस्य' (2177)= बोभूयिषयि (with णिच्)=बोभूयिषयिषति (with सन्). Similarly in the case of यङ् णिच् etc. Note that in such cases (प्रत्ययमाला) यङ् must take place first of all or it cannot apply at all in 'धातोरेकाच:—' (2629).

Here ends the प्रत्ययमाला in तिङन्त।

मित—। अथ धातुभ्यउत्तरमेकोत्तरेप्रत्ययप्रयोग' प्रतिपिपादयिषन् प्रत्यय-मालामाह—कण्डूयतेः सन्नित्यादिना। कण्ड्वादेरिति। वार्त्तिकमिदम्। यगन्तस्य कण्ड्वादेस्तृतीयस्यैकाचो द्वित्वमिति तदर्थः। यथेष्टमिति—वार्त्तिकमिदम्। अजादेस्त्विति—। अजादेर्द्वितीयस्येत्याद्यस्य निषेधादिति :भाव:। नदराणामिति। 'न न्द्राः—' (२४४६) इत्यनुसारात्। चिचन्द्रीत्यादि। अत्राजादित्वाभावादेकस्य प्रियमाख्यातुमित्यादि। पूर्ववार्थे 'तत्करोति तदाचष्टे' इति णिचि णाविष्ठवद्-भावेन 'प्रियस्थिर—' (२०१६) इत्यादिना प्रादेशे तस्य वृद्धौ पुकि च 'प्रि

इति नामधातुः सम्पद्यते। तस्य 'यथेष्टं नामधातुषु' इति सनि प्राग्वत्द्वित्वादि। उक्तरत्वार्थं (प्रियमाचक्षाणं प्रेरयितुमिच्छतीत्यत्र) तु प्रापि इति ण्यन्ताद्धेतुमण्णिचि द्वितीयणिचमाश्रित्य प्रथमणिचोर्लोपे 'प्रापि' इत्येव नामधातुः। तस्याप्युक्तन्यायेन द्वित्वादि। सिसाधयिषतीत्यादि। आदिपदेन सादिधयिषति। साधयियिषति इत्य-न्वयोर्ग्रहणम्। 'अन्तिकबाढयो'रिति साधादेशः। एवं निनेदयिषतीत्यादावपि रूपत्रयमूह्यम्। षत्वं त्विति। आदेशावयवत्वाभावात् इण्कोः परत्वेऽपि षत्वाभाव इति भावः। यङ् सन्नित्यादि। अत्र मौलिकाद्यङ् (भू+यङ्= बोभूय)। तदन्तात् सन् (बोभूयिस—'लिटिधातोः—' (२१७७) इत्यभ्यासस्य द्वित्वनिषेधात्)। तदन्ताण्णिच् (बोभूयिषयि)। तदन्तात्सन् (बोभूयिषयिषति)। एवं यङ्णिजित्यादौ। 'धातोरेकाचः—' (२६२६) इत्युक्तदिशा यङः प्रागेव प्रयोगो न्याय्य इति बोध्यमित्यलम्।

इति मितभाषिण्यां तिङन्तप्रत्ययमाला-प्रकरणम्।

अथ

# तिङन्तात्मनेपद प्रकरणम्

दी—। 'अनुदात्तङित आत्मनेपदम्' (२१५७)। आस्ते। शेते।

२६७९। भावकर्मणोः ॥१।३।१३॥

दी—। बभूवे। अनुबभूवे।

२६८०। कर्त्तरि कर्मव्यतिहारे। १।३।१४।

दी—। क्रियाविनिमये द्योत्ये कर्त्तर्यात्मनेपदं स्यात्। व्यति लुनीते। अन्यस्य योग्यं लवणं अन्यः करोतीत्यर्थः। 'श्नसोरल्लोपः' (२४६९)—व्यतिस्ते। व्यतिषाते। व्यतिषते। 'तासस्त्योर्लोपः' (२१९१) इति सलोपः। व्यतिसे। 'धि च' (२२४८) व्यतिध्वे। 'ह एति' (२२५०)—व्यतिहे। व्यत्यसै। व्यताऽऽस्तां। व्यतिषीत॥ व्यतिराते। व्यतिराते। व्यतिराते॥ व्यतिभाते। व्यतिभाति। व्यतिभाते। व्यतिबभे।

आस्ते—आत्मनेपद due to अनुदात्तेत्व; शेते—due to ङित्त्व। In the भाव and कर्मवाच्य, roots take आत्मनेपद terminations. Thus बभूवे (तेन भाववाच्य); and अनुबभूवे (तेन सुखम्—कर्मवाच्य)।

(But) in the active voice or कर्त्तृवाच्य (too) a root takes आत्मनेपदी terminations, provided there is the implication of

change of action ( or relation etc ) e.g. व्यतिलुनीते—or returns the like for like in the matter of cutting off (of paddy etc) on the part of another. व्यतिषाते ( वि—अति—अस् + आते )—by अल्लोप as before and षत्व by 'उपसर्गप्रादुर्भ्याम्—' ( 2572 ). व्यतिषते—'आत्मनेपदेष्वनतः' ( 2258 ). व्यतिसे—वि—अति—अस् से ( 'धासः से' ). व्यतिध्वे—वि—अति—अस्—ध्वे । व्यतासै—वि—अति—अस् + लोट् ऐ by 'एत ऐ' ( 2253 ). व्यताख्त in लङ्—sing. व्यतिषीत—लिङ् sing. व्यतिराते etc व्यति—रा ( दाने अदादि ) + ते etc. 'आत्मनेपदेष्वनतः' ( 2258 ).

मित—। अथ पदव्यवस्थां विवक्षुरात्मनेपदमभिधत्ते—'अनुदात्तङितः—' इत्यादिना। क्रमेणोदाहरणे।

भावकर्मणोरिति। 'अनुदात्तङितः—' ( १।३।१२ ) इत्यत आत्मनेपदमित्यनुवर्त्तते। धातोरिति चाधिकृतम्। तेन 'भावे कर्मणि च धातोरात्मनेपदं स्यात्' इत्यर्थः। भावे आह—बभूवे इति। तेनेति शेषः। कर्मणि—अनुबभूवे इति। तेन सुखम् आनन्दो वेति शेषः।

कर्त्तरीति। पूर्ववदवाप्यनुवृत्तिः। व्यतिहारो विनिमयः। अत आह—क्रियाविनिमये द्योत्ये इत्यादि। व्यतिलुनीते इति—लूञ् लवणे क्र्यादिकः। 'प्वादीनां ह्रस्वः' ( २५५८ ) इति ह्रस्वः। 'ई हल्यघोः' ( २४९७ ) इति ईत्त्वम्। अन्यस्येति—'शूद्रस्य योग्यं शस्यादिलवणं ( छेदनं ) ब्राह्मणः करोतीत्यर्थः' इति तत्त्वबोधिनी। व्यतिसे इति—धर्मोऽस्मिसत्य' तव राक्षसोऽयम् अन्यो व्यतिस्ते तु ममापि धर्मः' इति भट्टिः। व्यतिषाते इति। 'उपसर्गप्रादुर्भ्याम्—' ( २४७२ ) इति षत्वम्। व्यत्यसै इति। लोडुत्तमपुरुषैकवचनम्। व्यत्यास्त इति—लङि रूपम्। व्यतिराते इति—रा दाने इत्यस्य तातांझेषु समानमेव रूपम्—'आत्मनेपदेष्वनतः' ( २२५८ ) इत्यनुसारादन्तिमस्यापि पूर्व्ववत्त्वात्। एवं व्यतिभाते इत्यपि।

२६८१ । न गतिहिंसार्थेभ्यः ॥१।३।१५॥

दो— । व्यतिगच्छन्ति । व्यतिघ्नन्ति । 'प्रतिषेधे हसादीनामुपसंख्यानम्' ( वार्तिक ) । हसादयो हसप्रकाराः शब्दक्रियाः व्यतिहसन्ति । व्यतिजल्पन्ति । 'हरतेरप्रतिषेधः' ( वार्तिक ) संप्रहरन्ते राजानः ।

Roots expressing movement, injury etc do not take आत्मने terminations even if reciprocity of action or कर्मविनिमय is present therein. 'प्रतिषेधे—' etc—(varttika)— 'In the matter or jurisdiction of prohibition, roots like हस् etc should be enlisted.' There being no class of हसादि roots Bhattoji says that roots expressing laughter-like sounds are to be treated as हसादि. Thus व्यतिहसन्ति 'laugh in imitation of others' etc. 'हरतेः—' another varttika meaning 'prohibition of आत्मने will not apply in the case of the root हृ. Thus संप्रहरन्ते 'The Kings strike one another.' Some say that this varttika is suggested by the term 'अर्थ' in the rule as the root हृ expresses injury ( हिंसा ) in connection with उपसर्गs though not by itself.

मित— । न गतीति—पूर्ववदनुवृत्तेः । अर्थशब्दः प्रत्येकमभिसम्बध्यते तेन कर्मव्यतिहारे द्योते गत्यर्थेभ्यो हिंसार्थेभ्यश्च आत्मनेपदं नेत्यर्थः । व्यतिघ्नन्ति हो हन्तेरिति कुत्वम् । 'गमहनजनखनघसां लोपः—' इत्युपधालोपः । प्रतिषेधे इति—वार्त्तिकमिदम् । हसादेर्गणस्यादर्शनादाह—हसादय इति । हरतेरिति वार्त्तिकान्तरम् । संप्रहरन्त इति । प्रहारस्ययोग्यं प्रहारं कुर्वन्तीत्यर्थः । उपसर्ग योगाभावेऽपि ये धातवो गतिहिंसयोर्वर्त्तन्ते तेषामेवात्र ग्रहणम् । हरतेस्तु

वस्तुदेव हिंसार्थक इत्यर्थग्रहणालभ्यमिदं वार्त्तिकमित्याहुः। अतोऽत्र आत्मनेपद प्रतिषेधो न।

## १३८२। इतरेतरान्योन्योपपदाच्च ॥१।३।१६॥

दी—। 'परस्परोपपदाच्चेति वक्तव्यम्' (वार्तिक)। इतरेतरस्यान्योऽन्यस्य परस्परस्य वा व्यतिलुनन्ति।

When the terms इतरेतर and अन्योऽन्य stand contiguous, the root does not become आत्मनेपदी even with क्रियाविनिमय। It has to be stated that the root is not आत्मनेपदी also when the word परस्पर stands so. Thus इतरेतरस्य etc.

मित—। इतरेतरेति। 'अनुदात्तङित—' इत्यतः आत्मनेपदमित्यनुवर्त्तते। न गतीत्यतो नेति च। उपसमीपे उच्चारितं पदमुपपदम्। उपपदशब्दस्य प्रत्येकमुपयोगः 'द्वन्द्वान्ते श्रूयमाणः शब्दः प्रत्येकमभिसम्बद्ध्यते' इति न्यायात्। तेनेतरेतरोपपदादन्योऽन्यापदाच्च धातोरात्मनेपदं नेति सूत्रार्थः। परस्परेति। वार्त्तिकमिदम्। अर्थः समानः। तदाह—इत्यरेतरस्येत्यादि।

## १३८३। नेर्विशः ॥१।३।१७॥

दी—। निविशते।

The root विश् preceded by नि is आत्मनेपदी। Thus निविशते।

मित—। नेरिति। नेति कर्मव्यतिहारे इति च निवृत्तम्। कर्त्तरीति तु वर्त्तते। तेन निपूर्वाद्विशेः कर्तर्यात्मनेपदं स्यादित्यर्थः। निविशते इति। नन्वेडागमव्यवधानात् नेः परत्वाभावादात्मनेपदं न स्यादिति चेन्न। 'अड्व्यवाये उपसंख्यानमि'ति वार्त्तिकात्तथात्वसिद्धेरिति 'शदेः शित'इत्यत्र भाष्ये स्पष्टम्। नेः किम्? प्रविशति। 'मधूनि विशन्ति भ्रमराः'।

२६८४। परिव्यवेभ्यः क्रियः ।१।३।१८॥

दी—। अकर्त्रभिप्रायार्थमिदम्। परिक्रीणीते। विक्रीणीते। अवक्रीणीते।

The root क्री (क्रीञ् द्रव्यविनिमये) preceded by परि, वि, अव takes आत्मनेपद terminations e.e. परिक्रीणीते etc. We could have आत्मनेपद by the rule 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' (21.. as the root क्रीञ् is ञित्. Hence this rule is to direct आत्मने.. even when the fruition does not accrue to the agent.

मित—। परीति। पूर्ववन्निवृत्त्यनुवृत्ती। अर्थश्च। सुबोपयोगमाह—अक.. भिप्रायार्थमिति। अयमर्थः। 'क्रीञ् द्रव्यविनिमये' इति क्र्यादिको धातुः। त.. ञित्त्वात् 'स्वरितञितः—' (२१५८ — १।३।७२) इति कर्तृगामिन्येव फले आत्मनेपदं स्यादिह तु अकर्तृगामिन्यपि फले इति पूर्वस्मादृभेदः।

२६८५। विपराभ्यां जेः ॥१।३।१९॥

दी—। विजयते। पराजयते।

Eng.—Easy.

मित—। वीति। प्राग्वदर्थः। विजयते इति। सर्वोत्कर्षेण वर्तत इत्यर्थः 'विजयतां महाराजः।' पराजयते इति—ग्लायतीति, निकृष्टो भवतीति वा 'पराजिरसोढः' इत्यादौ दर्शनात्।

२६८६। आङो दोऽनास्यविहरणे ॥१।३।२०॥

दी—। आङ्पूर्वाद् ददातेर्मुखविकसनादन्यत्रार्थे वर्तमानादात्मनेपदं स्यात्। विद्यामादत्ते। 'अनास्य—' इति किम्? मुखं व्याददाति। आस्यग्रहणमविवक्षितम्। विपादिकां व्याददाति। पादस्फोटो विपादिका। नदी कूलं व्याददाति।

'पराङ्गकर्मकान्न निषेधः' ( वार्तिक ),—व्याददते पिपीलिकाः पतङ्गस्य मुखम् ।

आत्मनेपद ( terminations ) are attached after the root दा, preceded by आङ् and denoting any sense other than opening the mouth—e.g. विद्याम् etc receives knowledge ; why say 'अनास्य—' ? Witness—मुखम् etc 'opens the mouth', where दा is परस्मै. despite it is preceded by 'आ'. Here in the rule the word 'आस्य' must not purposely be taken to mean the 'mouth' only (of a human being ). Hence instances like विपादिकाम्—etc (opens the abscess on the foot ), and नदीकूलम् etc—The river rends or eats into the bank—etc are correct. 'पराङ्ग—etc' (vartika )—'when the root आ+दा has the mouth of a different person for its object, the prohibition 'अनास्यविहरणे' as in the above rule does not apply. e. g. व्याददते etc—The ants are opening the mouth of the bird ('पतङ्गः पक्षिसूर्ययोः' इत्यमरः ) ।

[ N. B.—But it should be remembered that if the consequences of the action are intened to affect the agent alone, आ+दा should take the आत्मनेपद even when it means to open the mouth. Compare व्यादत्ते in "व्यादत्ते विहगपतिः मुखं स्वकीयम्" The Garuda opens his own mouth. Thus वृत्तिकार under this rule says "अकर्त्रभिप्रायार्थमारम्भः ।" ]

मित—। आङ इति। आङः + दः + अनास्यविहरणे—(न + आस्यविहरणे) इतिच्छेदः। अत्र 'दः' इति दाधातोर्लुप्ताकारस्य पञ्चम्यानिर्देशः। चास्यविहरणमिति वदनव्यादानार्थकं तदाह—आङ् पूर्वादित्यादि। अनास्यविहरणे इति प्रसज्य—प्रतिषेधस्तदाह—'अनास्य—' किमिति ? अविवक्षितमिति। औपचारिकमित्यर्थः।

तेन यथा कथञ्चित् साम्यमादाय अन्यत्रापि नेतिभावः। विपादिकामिति—म्यादादाति विकासयतीतिवृत्तिः। नदीकूलमित्यत्र तु भिनत्तीत्यर्थः। पादकौ इति—अमरवचनमेतत्। 'पराङ्ग—' इति—वार्त्तिकमिदम्। आङ्पूर्वाद्दर्शे पराङ्गकर्मकात्तु 'अनाप्तविहरणे' इति निषेधो न प्रवर्त्तते इति वार्त्तिकाशः अतएवात्र 'व्याददते—' इत्यत्रात्मनेपदम्। पिपीलिकाः—कर्तृपदम्। पतङ्गाः पक्षिणः। 'पतङ्गः पक्षिसूर्य्ययो'रित्यमरात्।

२६८७। क्रीडोऽनुसंपरिभ्यश्च ॥१।३।२१॥

टी—। चादाङः। अनुक्रीड़ते। संक्रीड़ते। परिक्रीड़ते। आक्रीड़ते। अनोः कर्मप्रवचनीयान्न, उपसर्गेण सा साहचर्य्यात्। माणवकमनुक्रीड़ति (अनु क्रीड़ति।) तेन सहेत्यर्थः। 'तृतीयार्थे' (५५९) इत्यनोः कर्मप्रवचनीयत्वम्॥ 'समोऽकूजने' (वार्तिक)। संक्रीड़ते। कूजने तु संक्रीड़ति चक्रम्। 'आगमेः क्षमायाम्' (वार्तिक)। ण्यन्तस्येदं ग्रहणम्। आगमयस्व तावत्। मा त्वरिष्ठा इत्यर्थः। 'शिक्षेर्जिज्ञासायाम्' (वार्तिक)। धनुषि शिक्षते। धनुर्विषये ज्ञाने शक्तो भवितुमिच्छतीत्यर्थः। 'आशिषि नाथः' (वार्तिक)। आशिष्येवेति नियमार्थं वार्तिकमित्युक्तम्—सर्पिषो नाथते। सर्पिर्मे स्यादित्याशास्ते इत्यर्थः। कथं 'नाथसे किमु पतिं न भूभृताम्' इति। 'नाधसे' इति पाठ्यम्। 'हरतेर्गतताच्छील्ये' (वार्तिक)। गतं प्रकारः। पैतृकमश्वा अनुहरन्ते। मातृकं गावः। पितुर्मातुश्चागतं प्रकारं सततं परिशीलयन्तीत्यर्थः। 'ताच्छील्ये' किम्? मातुरनुहरति। [illegible]

वाच्यम्' ( वार्तिक ) हर्षादयो विषयाः । तत्र हर्षो विक्षेपस्य कारणम् ; इतरे फले ।

The root क्रीड़, preceded by अनु, सम् and परि—and from the (acceptance of ) च—preceded by आङ्, becomes आत्मनेपदी e.g. अनुक्रीड़ते etc. Here अनु is to be taken as the उपसर्ग due to its position along with the उपसर्ग सम्. Thus the root क्रीड़ will not be आत्मनेपदी when preceded by the कर्मप्रवचनीय अनु ; e.g. 'माणवकम्—' i.e. plays with ( अनु ) him. [The वृत्ति here reads अनु along with क्रीड़ति but as a कर्मप्रवचनीय, it must stand apart from क्रीड़ति ]. The indeclinable 'अनु' is termed कर्मप्रवचनीय by the rule 'तृतीयार्थे' ( 549 ). 'समः'—This is a varttika—'The root क्रीड़, preceded by सम्, will be आत्मनेपद only when it means other than कूजन—a peculiar sound (crackling ) or chirping. Thus 'संक्रीड़ति चक्रम्'—the wheel crackles. Also संक्रीड़न्ति विहगाः—the birds are chirping. 'आगमेः —' ( another varttika )—'The root गमि ( गम् + णिच् ) preceded by आङ् is आत्मने. in the sense of tolerance or waiting e.g.— 'आगमयस्व—' i.e wait a bit please ( do not make haste ). 'शिक्षेः —' ( varttika ) the root शिक्ष is आत्मने. when any mention of knowledge is expressed e.g 'धनुषि i.e intends to acquire skill in the art of weapons. 'आशिषि—' (varttika)—'इत्युक्तम्' i.e. while explaining 'नाधृ च नाथ याच्ञोपतापैश्वर्याशीःषु' under 'अपूर्वा—' (2259 ), we have said that नाथ is आत्मने. only when it expresses the sense of आशीः—wish or hope. Thus 'सर्पिषः—'

i.e he wishes to have clarified butter for himself. Well then how to explain the आत्मने. of नाथ in instances like 'नाथसे किमु—' ( in Bharavi XIII, where नाथ is used in the sense of begging याच्ञा). The answer is that it ( नाथसे ) should be read as 'नाधसे' ॥ हरते:— (varttika) to imitate nature. Hence the dictum means 'the root हृ is आत्मने. when the imitation or reproduction of the manners of a creature is expressed. Thus पैतृकम् etc —Horses imitate or put into practice the manners or gestures of their progenitors and cows those of their mothers. Why 'ताच्छील्ये'—in imitation of nature? Witness हरति:—where हृ is परस्मै as there is no imitation of manners here expressed. 'किरते:—' ( varttika ) The roor 'कृ' is आत्मने. when it expresses glee, ( collection of sustenance and the building of nests. Here हर्ष stands for the matter of हर्ष and indicates the cause of scattering, whereas the last two e.g. 'procuring provision and building nests, indicate the result of scattering ( विक्षेप ). Thus it is evident that the root 'कृ विक्षेपे' here stands for the cause and consequence of विक्षेप, its primitive sense.

सित— । क्रीड़ इति । पूर्वसूत्रादाङ इति पञ्चम्यन्तमनुवर्तते । तच्छे पं पूरयति चात् ( चकारात् ) आङ् इति । तेन अनुसंपर्याङ्भ्यः परतः क्रीड़तेरात्मनेपद मित्यर्थः । अनोरिति ; युक्तिमाह—उपसर्गेण सहेति । एतच्च 'अनोःकर्मप्रवचनीय इति वार्तिकाल्लभ्यम् । अनुक्रीड़तीति । नन्वं लिपिकर—प्रमादादिदं सन्निवेशि अनोः कर्मप्रवचनीयत्वेन पृथगवस्थापनस्यैव औचित्यात् । 'समः—' वार्तिकमिदं संक्रीडति चक्रमिति । विहगाः क्रीड़न्तीत्यपि प्रत्युदाहरणम् । 'आगमेः—' इति वार्तिकान्तरम् । सा त्वरिष्ठा इति । त्वरां मा कार्षीरित्यर्थः । अपेक्षस्वेति इति

हरतेर्भौवादिकाल्लुङ्। 'न माङ्योगे' इत्यट् प्रतिषेधः। भाष्य ण्यन्तस्यैवोदाहृतत्वात् ण्यन्तस्यैवोक्तम्। शिक्षेरिति—वार्तिकान्तरम्। तत्र शिक्षेरिति शकेः सनि 'सनि मीमा—' इति इस्। अभ्यासलोपः। 'शिक्ष विद्योपादाने' इति भौवादिकस्य तु न ग्रहणम्। अनुदात्तेत्त्वादेवसिद्धेरित्याहुः। धनुषि इति विषयसप्तमी। तदाह— धनुर्विषये इत्यादि। आशिषीति—वार्त्तिकान्तरम्। इतुयुक्तमिति। 'नाथृ ६ नाधृ ७ याच्ञोपतापैश्वर्य्याशीःसु' इत्यस्यार्थकथनावसरे 'शपूर्वाः—' ( २२५८ ) इत्यवेत्यर्थः। नाथसे इति—किरातार्ज्जुनीयस्यायं श्लोकः। तत्र नाथसे इति याचने इत्यर्थकम्। अतः परस्मैपदेन भाव्यमितिमत्वा समाधत्ते—नाथसे इति। समवृत्तिकत्वादिति भावः। हरतेरिति—वार्त्तिकान्तरम्। गतशब्दस्यार्थमाह—गतं प्रकार इति। ताच्छील्यं तत्स्वभावता। तेन स्वभावतो गमनावस्थानतर्ज्जनादि प्रकारानुकरणे हरतेरात्मनेपदमित्यर्थः। पैतृकमिति—पितुः प्राप्तं वृत्तम् इत्यर्थः। मातृकं गाव इति। अनुहरन्ते इति वाक्यशेषः। परिशीलयन्तीति। अभ्यस्यन्त्यनुतिष्ठन्ति वेत्यर्थः। ताच्छील्याभावे आत्मनेपदं नेत्याह—ताच्छील्ये किमिति ? अनुहरतीति। कृत्रिमं सादृश्यमात्रं कादाचित्कमत्र विवक्षितम् न तु सहजम्। किरतेरिति—अत्र विषयाधिकरणे सप्तमीतिमत्वाह—हर्षादय इति। 'कॄ विक्षेपे' इति तौदादिको धातुस्तस्य च तथाविधार्थाभावादाह—तत्र हर्षं इति। तेन धातुरयमुपसर्गवशादत्र कार्य्यकारणयोवर्त्तते इत्याह—इतरैफले इति। जीविकाकुलाय-करणे कार्य्यवृत्तिके इत्यर्थः।

२३८८। अपाच्चतुष्पाच्छकुनिष्वालेखने ॥६।१।१४२॥

टी—। अपात् किरतेः सुट् स्यात्। 'सुडपि हर्षादिष्वेव वक्तव्यः' ( वार्तिक )। अपस्किरते वृषो हृष्टः। कुक्कुटो भक्ष्यार्थी श्वा आश्रयार्थी च। हर्षादिषु इति किम् ? * अपकिरति

* इह तत्त्वबोधिन्याम् 'अपां किरति कुसुमम्' इति पाठो दृश्यते। स समीचीनः। उपसर्गयोगाभावेन किरतेस्तङ्सुडविषयत्वेन प्रत्युदाहरणत्वायोगात्।

कुसुमम्—इह तङ्सुटौ न। हर्षादिमात्रविवक्षायां यद्यपि तङ् प्राप्तस्तथापि 'सुडभावे नेष्यते' इत्याहुः। गजोऽपकिरति। 'आङि नुप्रच्छ्योः' (वार्तिक)—आनुते। आपृच्छते। 'शप उपालम्भे' (वा—)। आक्रोशार्थात् स्वरितेतोऽकर्तृगेऽपि फले शपथरूपेऽर्थे आत्मनेपदं वक्तव्यमित्यर्थः। कृष्णाय शपते।

The augment सुट् comes in before the root कॄ when it is preceded by the उपसर्ग अप and means scratching or digging with reference to quadrupeds or birds. 'सुडपि—' (varttika)—'It has to be stated that सुट् also takes place— only when 'हर्ष etc—' are meant or referred to. अपस्किरते etc —The bull is digging the earth out of glee,—the cock for food and the dog for shelter. Why say 'हर्षादिषु—' in the matter of glee etc ? Witness 'अपकिरति—' casts off the flower ( the bull, the dog or the cock ). Here तङ् and सुट् do not appear because neither हर्ष etc, nor आलेखन is referred to. Although तङ् or आत्मनेपद was due ( to the root ) in the matter हर्ष etc only, yet it has been said that तङ् will not appear when सुट् is wanting. गजोऽपकिरति—here सुट and तङ् are not used because आलेखन or digging the earth is beyond the nature of an elephant. 'आङि—' (varttika)—The root नु and प्रच्छ् preceded by आङ् are आत्मनेपद; आनुते—the jackal yelps. आपृच्छते—bids farewell ( to a friend ). 'शप—' (varttika)—The root शप is स्वरितेत् and means 'आक्रोश' to think of incongruities or to disagree, cp. शप् आक्रोशे ( भ्वादि ).

it ends in ५मी. Hence Bhattoji says 'आक्रोशार्थात्—etc' i.e. the meaning of the varttika is—'It has to be stated that the root शप which is स्वरितेत् ( उभयपदी ) and denotes आक्रोश will have आत्मने. endings in the sense of expressing by swearing even when the fruition does not accrue to the agent. Thus 'कृष्णाय—' i.e. discloses by swearing, (her) mind to Krishna.

मित—। अपादिति। अपात्+( चतुष्पात् शकुनिषु )+आलेखने इति छेदः। 'सुट्कात् पूर्वः' ( ६।१।१३५ ) इत्यतः सुडिति। 'किरतौ लवने' (६।१।१४० ) इत्यत किरताविति चानुवर्त्तते। तच्च षष्ठ्या विपरिणमय्य आह—अपात् किरतेरिति। तङ् तु 'किरतेर्हर्ष—' इति वार्तिकेनैवेति ज्ञेयम्। सुडपीति वार्त्तिकम्—हर्षादिष्वेवेति। आदिपदेन जीविकाकुलायकरणे ग्राह्ये। अपस्किरते इत्यादीनि हर्षाद्यर्थेषु क्रमेणोदाहरणानि। अपकिरति कुसुममिति। हर्षोत्कुक्कुटोर्वेति शेषः। अत्र कुसुमापकिरणस्य हर्षजीविकादिरूपकार्यकारणवृत्तित्वाभावात् न तङ् नापि सुडिति। स्वयमेवाह—इहेति। नन्वत्र विशिष्य विहितत्वादालेखने एव तङ्सुटौस्ताम् हर्षादिषु तु यथाप्राप्तवार्त्तिकेण तङेवास्तु किमिह हर्षादिष्वप्यागमविधानेनेत्याशङ्क्य आह—हर्षादिमात्रविवक्षायामिति। नेष्यत इति। तङिति परामृश्यते। इत्याहुरिति। अभियुक्ता इत्यर्थः। गजोऽपकिरतीति। अत्रालेखनस्य गजप्रकृतिविरुद्धत्वेन तङ्सुटौ न। आङीति—वार्त्तिकम्। 'आनुते शृगाल' इति भाष्यम्। शृगाल उत्कण्ठापूर्वकं शब्दं करोतीत्यर्थ इति कैयटः। 'आपृच्छस्व प्रियसखममुं तुङ्गमालिङ्ग्य शैल'मिति पूर्वमेघः। साधो, यामीत्यामन्त्रणेन सभाजयेत्यर्थः। शप उपालम्भे इति—वार्तिकम्। उपालम्भस्तिरस्क्रिया। स च गुणदोषकरणरूपेण स्तुतिपूर्वकोनिन्दापूर्वकश्च। यथा—'महाकुलीनस्य भवतः किमिदमुचितम्', यथा वा—'वन्धकीपुत्रस्य तदेवमुचितमेव' इति भागुरिरिति केचित्। अत्र तु शपथपूर्वकं स्वाभिप्रायप्रकाशनमिति नागेशः। माघे 'शप उपलम्भने' इतिपाठः। तदेव च माधवीयधातुवृत्तौ ... 'शप

आक्रोशि इति औवादिक आक्रोशार्थकः खगितेतोऽयं धातुः। पञ्चम्यन्तोऽयं। तदाह—आक्रोशार्थादित्यादि। भुादौ कर्त्तृगेएव फलेऽयमात्मनेपदी। इह तु तथेत्याह—अकर्त्तृगेऽपि फले इत्यादि। वक्तव्यमित्यर्थः इति। वार्त्तिकलयोतनात् इदम्। अतएव 'आक्रोशार्थात्—' इत्यादिव्याख्यानं वृत्त्यनुरोधेन इति नागेशः। इत्यार शपते इति। 'श्लाघह्नुङ्स्थाशपां ज्ञीप्समानः' (५७२) इति चतुर्थी। अयमेव स्वानुरागं प्रकाशयतीत्यर्थः। 'सत्यः शपामि यदि किञ्चिदपि स्मरामी'त्यत्र शपथ-मात्रमर्थः न तु स्वाभिप्रायाविष्करणमिपीति न तङ् इति नागेशः। एवं "सत्येन शपामि" इति स्वप्नवासवदत्ते च सङ्गच्छते।

## २६८९। समवप्रविभ्यः स्थः ॥१।३।२२॥

दी—। सन्तिष्ठते। 'स्थाघ्वोरिच्च' (२३८९)—समस्थित। समस्थिषाताम् समस्थिषत। अवतिष्ठते। प्रतिष्ठते। वितिष्ठते। 'आङः प्रतिज्ञायामुपसंख्यानम्' (वार्तिक)। शब्दं नित्यमातिष्ठते। नित्यत्वेन प्रतिजानीते इत्यर्थः।

The root स्था coming after the उपसर्गs सम्, अव, प्र and वि becomes आत्मनेपदी e.g संतिष्ठते etc. समस्थिषाताम् etc. by इत्व and षत्व of सिच्. स्था=तिष्ठ by 'पाघ्राध्मास्था—' (2360). 'आङः—' (varttika)—'It has to be said that स्था coming after आ also in the sense of promise' or 'admission' is आत्मनेपदी. Thus 'शब्दम्—' i e admits permanent existence of words.

सित—। समेति। सम्वप्रविपूर्वात्तिष्ठतेरात्मनेपदं स्यादित्यर्थः। सन्तिष्टते इति। पाघ्राध्मास्थेति तिष्ठादेशः। आङ इति—वार्त्तिकमिदम्। प्रतिज्ञायामिति। अभ्युपगमे इत्यर्थः।



## २६९०। प्रकाशनस्थेयाख्ययोश्च ॥१।३।२३॥

टी—। गोपी कृष्णाय तिष्ठते। आशयं प्रकाशयतीत्यर्थः। 'संशय्य कर्णादिषु तिष्ठते यः'। कर्णादीन्निर्णेतृत्वेनाश्रयतीत्यर्थः।

आत्मनेपद takes place after the root स्था denoting 'expression of one's heart ( specially internal desire )' and 'having recourse to one as a connoisseur or arbitrator (critical judge )'. Thus 'गोपी—' i.e. the cow-herdess expresses her heart or motive to Krishna, and 'संशय्य—' ( भारवि—III. sl. 14 ) i.e who, in cases of doubt, have recourse to Karna and others.

मित—। प्रकाशनेति। प्रकाशनं ज्ञापनम्। स्थेयो विवादपदनिर्णेता। तिष्ठतेऽस्मिन्निर्णेतृत्वेनेति बाहुलकादधिकरणे 'अचो यत्' इति यत्। 'स्थेयोविवादस्थानस्य निर्णेतरि पुरोहिते' इति मेदिनी। अत्र तु विवादनिर्णयरूपव्यवसायोऽर्थः। आख्या आख्यानम् आविष्करणमित्यर्थः। आख्या-शब्दस्य प्रत्येकंयोगः। पूर्वसूत्रात् 'स्थः' इति षष्ठ्यन्तमनुवर्त्तते। तेन प्रकाशनाख्यायां स्थेयाख्यायाञ्च वर्त्तमानात्तिष्ठतेरात्मनेपमित्यर्थः। कृष्णाय इति। 'श्लाघह्नुङ्— इति सम्प्रदानत्वाच्चतुर्थी। संशय्येति—भारवेरयं श्लोकांशः।

२६८१। उदोऽनूर्ध्वकर्मणि ॥१।३।२४॥

टी—। 'मुक्तावुत्तिष्ठते'। 'अनूर्ध्व—' इति किम्। पीठादुत्तिष्ठति। 'ईहायामेव'—( वार्तिक )। नेह—ग्रामाच्छतमुत्तिष्ठति।

आत्मनेपद takes place after स्था, following उद्, in the sense of 'not-rising,' e.g. 'मुक्ता—' i.e strives or makes effort for

emancipation. ( It is taken from Bharavi XI ). Why 'अनूर्ध्व—' in the sense of not-rising. Cp—'पीठात्—' rises from the seat. 'ईहायामेव—' (varttika) i.e उद्+स्था is आत्मनेपदी in the sense of making effort only. Thus 'ग्रामात्—' a hundred ( coins ) are raised or realised from the village'.

मित—। उद इति। अनूर्ध्वकर्मणीति। अनुत्थाने इत्यर्थः। इत्यनुवर्त्तते। उत्तिष्ठते इति = चेष्टत इत्यर्थः। पीठादित्यासनात्। ईहायामेवेति—वार्त्तिकम्। ईहा 'कायपरिस्पन्दरूपो व्यापार' इति नागेशः। परिस्पन्द प्रतियत्न इच्छापूर्विका चेष्टेत्यर्थः। तेन 'ग्रामात्—' इत्यत्र ऊर्ध्वदेशसंयोगव्यापाराभावेऽपि न तङ्। उत्तिष्ठतीति = उत्पद्यत इत्यर्थः। एवम्—'वर्द्धिष्णुर्वर्णेभ्योनृपाणां चयि तद्धनम्' इति शाकुन्तले।

२६८२। उपान्मन्त्रकरणे ॥१।३।२५॥

दी—। आग्नेय्याग्नीध्रमुपतिष्ठते। 'मन्त्रकरणे' किम्? भर्तारमुपतिष्ठति यौवनेन। 'उपाद्देवपूजासंगतिकरण-मित्रकरणपथिष्विति वाच्यम्' (वार्तिक)। आदित्यमुपतिष्ठते। कथं तर्हि 'स्तुत्य' स्तुतिभिरर्थ्याभिरुपतस्थे सरस्वती' इति देवतात्वारोपात्। नृपस्य देवतांशत्वाद्वा। गङ्गायमुनामुपतिष्ठते। उपश्लिष्यतीत्यर्थः। रथिकानुपतिष्ठते। मित्रीकरोतीत्यर्थः। पन्थाः स्रुघ्नमुपतिष्ठते। प्राप्नोतीत्यर्थः। 'वा लिप्सायामिति वक्तव्यम्' (वार्तिक)। भिक्षुकः प्रभुमुपतिष्ठते उपतिष्ठति वा। लिप्सया उपगच्छतीत्यर्थः।



The root स्था coming after उप takes आत्मने. In the sense

मन्त्रकरण or praise. Thus 'आग्नेय्या—' praises ( approaches near ) a particular fire ( आग्नीध्र ) with a Rik or hymn relating to Agni ) ( आग्नेयी ऋक् ). 'भर्तारम्—' approaches ( or pleases ) her husband with puberty. Thus it is evident that the rule is rather Vedic in character. Hence there runs the varttika—'उपाद्देवपूजा—'It has to be stated that आत्मने. takes place after स्था preceded by उप in senses of worshiping a God, embracing or union etc (संगतिकरण), making friends and leading ( to a spot ). Thus 'आदित्यम्—' worships the Sun-god. How then are we to defend 'स्तुत्यम्—' etc, Saraswati adored him ( Raghu ), fit for praise, with laudatory verses ( in Raghu—IV. 6 'परिकल्पितसान्निध्या काले काले च वन्दिषु ।' being the first half of the same ) where आत्मने. is objectionable on the ground that a king is not a God ? Well say that it is correct on the attribution of godliness or because a king is formed with the part of gods, cp. —

'इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च ।
चन्द्रवित्तेशयोश्चैव मात्राभि र्निर्मितो नृपः ॥" Manu—7. 4.

रथिक =having or fighting on a chariot.

पन्थाः—उपतिष्टते—the road leads to. 'वा लिप्सायाम्—' is a varttika.

मित—। उपादिति। 'समवप्र—' इत्यतः स्थ इति वर्त्तते। उपोऽत्र सामी-प्यवाची। मन्त्रः करणं यत्र मन्त्रकरणं स्तुतिः तत्र वर्तमानादुपतिष्टतेरात्मनेपमित्यर्थः। यथा 'मन्त्रकरणेऽर्थे' इत्यादि। आग्नेय्येति—अग्निर्देवता अस्याः इत्याग्नेयी ऋक्। अग्नेर्ढक् ( १२३६ ) इति ढक्। 'टिड्ढा णञ्—' इति ङीप्। तया ऋचा आग्नीध्रमग्निविशेषं मण्डपविशेषं वा उपतिष्ठते स्तौतीत्यर्थः। यद्वा उपेत्य तिष्ठतीत्यर्थः। भर्तारमिति—अत्र मन्त्रकरणकत्वाभावान्न तत्। अत्र 'मन्त्रकरणे' इत्यनेन वैदिक-

विषयमात्रस्याक्षेपादव्याप्तिं वार्तिकमुपन्यस्यति—उपाद्देवपूजेति। संगतिकरणमु- गूहणम् मेलनमिति यावत्। मित्रकरणं मित्रीकरणं मैत्रीत्यर्थः। पथिष्विति—पथ- प्रापणे इत्यर्थः। कथं तर्हीति—स्तुत्यमित्यत्र रघुर्वाणा उपस्थीयते। तस्य नरमात्रत्वेन देवतात्वाभावात् सरस्वत्युपस्थानं न सङ्गच्छते। तदभावाच्च नात्मनेपदमिति। अतः समाधत्ते—देवतात्वारोपादिति। 'परिकल्पितसान्निध्या काले काले च वन्दिषु' इति श्लोकपूर्वार्द्धम्। तेन 'नूनमयं देवतैव अन्यथा कथमियत्तेज इत्येवं देवता- मारोप्य स्तुत्यं स्तुतियोग्यं तं (रघुमित्यर्थः) स्तुत्याभिः अर्थोपेताभिः स्तुतिभि- स्तवैरूपतस्थे देवताबुद्ध्या पूजितवतीत्यर्थः। समाधानान्तरमाह—नृपमिति। 'अष्टाभिर्लोकपालानां मात्राभिर्निर्मितो नृपः', 'सुरेन्द्रमात्राश्रितगर्भगौरवात्' (रघु- ३।११) 'महतीदेवता ह्येषा नररूपेण तिष्ठती'ति शाश्वत-कालिदास-मन्वादुक्तेः। रथिकानिति। 'रथिको रथिनो रथी'त्यमरः। 'वा लिप्सयामि'ति—वार्तिकम्।

## २६९३। अकर्मकाच्च ॥१।३।२६॥

दी—। उपात्तिष्ठतेरकर्मकादात्मनेपदं स्यात्। भोजन- काले उपतिष्ठते। संनिहितो भवतीत्यर्थः।

Eng. Easy—This directs आत्मनेपद. when उप+स्था is intransitive. 'सन्निहितः—' presents himself or appears.

मित—। अकर्मकादिति। स्थ इति वर्त्तते। तथा च भारविः—"आत्मनी- मुपतिष्ठते" (सन्निहितो भवति)। मल्लिनाथस्तु अत्र सङ्गतिकरणे आत्मनेपदमिच्छ- —(मन्त्रेऽ 'आत्मनीनं (वस्तु) जनमुपतिष्ठते' सङ्गच्छते—इति व्याख्यानेन)। तद्भ्रमः। अन्यत् स्पष्टम्।

## २६९४। उद्विभ्यां तपः ॥१।३।२७॥

दी—। 'अकर्मकात्' इत्येव। उत्तपते। वितपते। दीप्यते इत्यर्थः। 'स्वाङ्गकर्मकाच्चेति वक्तव्यम्'। (वार्तिकम्)

